॥ श्री ॥

विश्वसत्त्वानुग्रहविहितानेकग्रन्थसन्दर्भसर्वतन्त्रस्वतन्त्र-
तपोगच्छाधिपति–आचार्यप्रवरभट्टारकश्री-
विजयनेमिसूरि प्रणीतम्. ॥



# ॥ श्रीलघुहेमप्रभा-
# व्याकरणम् ॥

अस्य पूर्वार्धभाग प्राग्वाटज्ञातीय शा लालचन्दहंसराज
इत्यस्य द्रव्यसाहाय्येन मुद्रित अवशिष्टश्च पूर्णो भाग
प्राग्वाटवणिग्वंशावतंसधर्मकर्मधुरीणश्रेष्ठिवर्यमनसुख-
भाईतनुजनुर्माणेकलालभाईश्रेष्ठिप्रवरेण श्रेयो
निमित्त श्रीग्रन्थप्रकाशकसभाद्वारा-
सम्मुद्र्य प्रकाशितः ॥


संवत् १९७८ वीरनिर्वाणम् सन १९२१
प्रथमावृत्ति २४४८ प्रतय ५००

तपोगच्छाधिपति-शासनसम्राट्-तीर्थरक्षणपरायण—विद्वद्-दानतस-

आचायमहाराजाधिराज-

## श्रीमद्-विजयनेमिसूरीश्वरजी.



| | | |
|---|---|---|
| जन्म स १९२९<br>कार्तिक शुक्ल १ | दीक्षा स १९४५<br>ज्येष्ठ शुक्ल ७ | आचार्यपद स १९६४<br>ज्येष्ठ शुक्ल ५ |

॥ अर्हम् ॥



## ॥ किञ्चित्प्रास्ताविकम् ॥

इह खलु नामसिद्धमेतद्विपश्चिदर्शनविदुषां यदुत जैनसुगतमीमांसककपिलाक्षपादादिनिःशेषमतानुयायिराद्धान्तग्रन्थानां ज्योतिर्वैद्यकसामुद्रिकनिमित्तसाहित्यादिग्रन्थानां च बाहुल्येन गीर्वाणगीर्गुम्फितत्वान्न तदविसंवादिपरिज्ञानशब्दज्ञानमृते सुगमं, तत्सम्पादकं च व्याकरणमत एवास्यावश्यकमध्ययनमिति तदेवाभिसन्धाय गूर्जरपतिश्रीसिद्धराजाभ्यर्थनया सार्धत्रिकोटिग्रन्थसौधसूत्रणसूत्रधारैः प्रतिबोधितकृपाधर्मप्रचारकपररमणीसहोदरपरमार्हतराजर्षिश्रीकुमारपालाद्यगण्यभव्यनिवहैः कलिकालसर्वज्ञैः श्रीहेमचंद्रसूरिपादैः प्रणीतमशेषशब्दशास्त्रसारं " श्रीसिद्धहेमशब्दानुशासनाभिधानं " व्याकरणं स्वोपज्ञवृहल्लघुवृत्तिबृहन्न्यासादिविभूषितमिति ॥

परमस्य प्रयोगाननुपातिसूत्रक्रमेण सद्व्यवरान्छन्दान्सिसाधयिषूणां न तथा सत्पल्पभावमङ्गीकरिष्यति तत्सम्पादनायेत्यवलम्ब्य सङ्केतमन्विष्टिकारकादिप्रकरणक्रमतस्तत एव संक्षिप्य च व्यरचि "हैमप्रकाश" व्याकरणं विद्वद्वृन्दवन्दिताङ्घ्रिपाथोजैः सदागमोपनिषदादिभिर्भव्योपकारपरायणैस्तीर्थत्राणप्रवणान्तःकरणैस्तपोगच्छोदयगगननभोमणिभट्टारकपुरन्दरैस्तत्रभवद्भिरस्मद्गुरुपादैः श्रीविजयनेमिसूरीशानैः । ततो मन्दशेमुषीशालिनोऽत एवानतिव्यासेन शाब्दप्रतिपत्त्यभिलाषिणो देहिनोऽनुगृहीतुं निर्मितं " लघुहैमप्रभाव्याकरणं " तैरवाराग्यपारैः ॥

ग्रन्थेऽस्मिन् ये छद्मस्थाखिलजनसाधारणभ्रमप्रमादादिदोषा
स्सद्योऽनवधानानुपातिनो दोषा ये च मुद्रणव्यापारनियुक्तनराणामभो
गादिरिङ्गणजन्या अक्षरमात्राबिन्दुस्थानिस्थस्थानविनिमयच्छेदवि
च्युत्यादिदोषास्तान् विशदीकरिष्यन्ति निसर्गतोऽपरस्खलनाप
नोदाभ्यासिनोऽन्यसद्गुणनिरीक्षणनिबद्धास्थाभाजोऽभियुक्ता
न्यायोदयति सूरिसच्चरणपुण्डरीकोपासनपरो मुनिपद्मविजयः ॥



॥ श्री ॥

॥ तपोगच्छाचार्यभट्टारकश्रीविजयनेमिसूरि-
विरचितम् ॥



# लघुहेमप्रभायाः पूर्वार्धम् ॥



तदेतत्
मरुधरस्थजावालनगरवास्तव्यशा. लालचंदहंसराज-
इत्यस्य द्रव्यसाहाय्येन राजनगरस्थ-
श्रीजैनग्रन्थप्रकाशकसभाया.
कार्यवाहक शा. वाडीलाल-बापुलाल
इत्येतेन समुद्य प्रकाशितम् ।

संवत् १९७७ | सन् १९२१

प्रथमावृत्तिः | अमूल्य | प्रतयः ५००

“ आ पुस्तक श्री जैन एडवोकेट प्रीन्टींग प्रेसमां शा.
चीमनलाल गोकळदासे छाप्युं घीकांटावाडी–
अमदावाद.

॥ ॐ नमो वीतरागाय ॥

गीतार्थत्वादिगुणोपेतसस्मारितातीतयुगप्रधानजगद्गुरु-
श्रीवृद्धिविजयचरणकमलेभ्यो नमः॥

आचार्यश्रीमद्विजयनेमिसूरिविरचितम् ॥

# ॥ श्रीलघुहेमप्रभाव्याकरणम् ॥

सच्चेतोऽम्भोजभानु प्रविदितसकल पार्श्वमास सुरेज्य
विद्वद्वृन्दैकमत्यस्तुतगुणनिवह हेमचन्द्र मुनीन्द्रम् ॥
स्तुत्वा श्रीवृद्धिचन्द्र गुरुममितगुणां भारतीमार्हतींच
सोऽह हेमप्रभां तां लघुमतिसुगमां नेमिसूरि. प्रकुर्वे॥१॥

अर्हम् ॥ १ । १ । १ ॥

इत्येतदक्षर परमेश्वरस्य परमेष्ठिनो वाचक मङ्गलार्थं प्रणिदध्महे ॥

सिद्धि स्याद्वादात् ॥ १ । १ । २ ॥

नित्यानित्याद्यनेकधर्माणामेकवस्तुनि स्वीकार स्याद्वाद । ततः शब्दानां निष्पत्तिर्ज्ञप्तिश्च ज्ञेया ॥

लोकात् ॥ १ । १ । ३ ॥

अनुक्ताना सज्ञाना न्यायाना च सिद्धिः। वर्णसमाम्नायस्य च॥ तत्र॥

औदन्ता स्वरा ॥ १ । १ । ४ ॥

एकद्वित्रिमात्रा ह्रस्वदीर्घप्लुताः ॥ १ । १ । ५ ॥

औदन्ता ॥ मात्रा कालविशेष । ते चोदात्तानुदात्तस्वरितभेदात् त्रिधा, सानुनासिकनिरनुनासिकभेदेन पुनर्द्विधा। उच्चैरुदात्त', नीचैरनुदात्त , समाहार स्वरितः। मुखनासिकेनोच्चार्यमाणः सानुनासिक ,

मुखेनैवोच्चार्यमाणो निरनुनासिकः ॥

अनवर्णा नामी ॥ १ । १ । ६ ॥

लृदन्ताः समानाः ॥ १ । १ । ७ ॥

ए ऐ ओ औ सन्ध्यक्षरम् ॥ १ । १ । ८ ॥

अं अः अनुस्वारविसर्गौ ॥ १ । १ । ९ ॥

कादिर्व्यञ्जनम् ॥ १ । १ । १० ॥

हान्तः ॥

अपञ्चमान्तस्थो धुट् ॥ १ । १ । ११ ॥

पञ्चको वर्गः ॥ १ । १ । १२ ॥

कादिषु ॥

आद्यद्वितीयशषसा अघोषाः ॥ १ । १ । १३ ॥

अन्यो घोषवान् ॥ १ । १ । १४ ॥

यरलवा अन्तस्थाः ॥ १ । १ । १५ ॥

यरलवाः सानुनासिका निरनुनासिकाश्च ॥

अं अः ≍ क ≍ प शषसाः शिट् ॥ १ । १ । १६ ॥

तुल्यस्थानास्यप्रयत्नः स्वः ॥ १ । १ । १७ ॥

यत्र पुद्गलस्कन्धस्य वर्णभावापत्तिस्तत्स्थानं कण्ठादि । अवर्णहविसर्गकवर्गाः कण्ठ्याः । इवर्णचवर्गयशास्तालव्याः । उवर्णपवर्गोपध्मानीया ओष्ठ्याः । ऋवर्णटवर्गरषा मूर्धन्याः । लृवर्णतवर्गलसा दन्त्याः । एऐ तालव्यौ । ओऔ ओष्ठ्यौ । वो दन्त्योष्ठ्यः । जिह्वयश्च जिह्वामूलीयः । नासिक्योऽनुस्वारः । ङञणनमाः स्वस्थाननासिकास्थानाः । सपञ्चमान्तस्थो ह उरस्यः ॥ आस्यप्रयत्न आन्तरः संरम्भः, स सप्तधा, स्पृष्टेषत्स्पृष्टविवृतेषद्विवृतविवृततरातिविवृततराति-

विवृततमभेदात्। स्पृष्टं करणं वर्ग्याणाम्। ईषत्स्पृष्टमन्तस्थानाम्। विवृतं स्वराणाम्। ईषद्विवृतं शषसहानाम्। विवृततरमेदोतोः। अतिविवृततरमैदौतोः। अतिविवृततममवर्णस्य॥

**अनन्तः पञ्चम्याः प्रत्ययः॥ १। १। ३८॥**

विहितः॥

**स्यौजसमौशस्टाभ्यांभिस्ङेभ्यांभ्यस्ङसिभ्यांभ्यस्ङसोसांङ्योस्सुपां त्रयी त्रयी प्रथमादिः॥ १। १। १८॥**

इजशटडपाश्चेतः॥

**स्त्यादिर्विभक्तिः॥ १। १। १९॥**

सुप्त्यामहिपर्यन्तः॥

**तदन्तं पदम्॥ १। १। २०॥**

**सविशेषणमाख्यातं वाक्यम्॥ १। १। २६॥**

**क्रियार्थो धातुः॥ ३। ३। ३॥**

साध्यमानलक्षणा क्रियाऽर्थो यस्य स धातुः॥

**न प्रादिरप्रत्ययः॥ ३। ३। ४॥**

धातोरवयवः॥

**चादयोऽसत्त्वे॥ १। १। ३१॥**

अव्ययानि स्युः॥

**धातोः पूजार्थस्वतिगतार्थाधिपर्यतिक्रमार्थातिवर्जः प्रादिरुपसर्गः प्राक् च॥ ३। १। १॥**

धातोरिति पञ्चमी षष्ठी च॥ षष्ठ्यर्थो योनकत्वम्। प्रादीनां क्रिया-

योगे गतिसंज्ञा वक्ष्यते। प्र, परा, अप, सम्, अनु, अव, निस्, दुस्, एतौ रान्तावपि, । वि, आङ्, नि, प्रति, परि, उप, अधि, अपि, सु, उत्, अति, अभि ॥

अप्रयोगीत् ॥ १ । १ । ३७ ॥

प्रसक्तस्यादर्शनं लुग्लुब्लोपसंज्ञम् ॥ ×
वर्णग्रहणे स्ववर्गाज्ञकस्य ग्रहणम् ॥ ×
कारग्रहणे केवलस्य ॥ ×
स्वं रूपं शब्दस्याशब्दसंज्ञा ॥ ×
तपरो वर्णस्तन्मात्रस्य ग्राहकः ×
विरामोऽवसानम् ॥ ×
वर्णानामर्द्धमात्रातिरिक्तकालाव्यवायेन कथनं संहिता ॥ ×
स्वराव्यवहितव्यञ्जनसमुदायः संयोगः ॥ ×
ह्रस्वं लघु ॥ ×
विसर्गानुस्वारयुक् संयोगपरश्च गुरुः ॥ ×
दीर्घं च ॥ ×
शत्रुवदादेशः ॥ ×
मित्रवदागमः ॥ ×

गुणोऽरेदोत् ॥ ३ । ३ । २ ॥

वृद्धिरारैदौत् ॥ ३ । ३ । १ ॥

शिर्घुट् ॥ १ । १ । २८ ॥

पुंस्त्रियोः स्यमौजस् ॥ १ । १ । २९ ॥

घुट् ॥

शिदवित् ॥ ४ । ३ । २० ॥

ङिद्वत् ॥ इति तसि गुणाप्राप्तावपि शवनिमित्तो गुण । तौ भवत । लुगस्यादेत्यपदे इत्यकारलुकि,, ते भवन्ति। त्व भवसि। युवां भवथ । यूय भवथ ॥

मव्यस्या ॥ ४ । २ । ११३ ॥

धातोर्विहिते प्रत्यये ॥ अह भवामि। आवां भवाव । वय भवामः। अन्यदर्थादिद्वयनयोगे शब्दस्पर्द्धात् पराश्रयमेव वचनम्। स च त्व च भवथः। स च त्व च अह च भवाम ॥

विधिनिमन्त्रणामन्त्रणाधीष्टसम्प्रश्नप्रार्थने॥५।४।२८॥

सप्तमीपञ्चम्यौ॥ सम्भावनादिष्वपि ॥

यः सप्तम्याः ॥ ४ । २ । १२२ ॥

अतः परस्यः ॥ शिष्यो गुरुसेवी भवेत्। भवेदसौ भव्यः श्राद्धत्वात् ॥

याम्युसोरियमियुसौ ॥ ४ । २ । १२३ ॥

अतः परयोः ॥ भवेयु । भवे । भवेतम्। भवेत । भवेयम्। भवेव । भवेम ॥

प्रैपानुज्ञावसरे कृत्यपञ्चम्यौ ॥ ५ । ४ । २९ ॥

आशिष्याशीःपञ्चम्यौ ॥ ५ । ४ । ३८ ॥

अध्ययनायोद्यतो भवतु चैत्र ॥

आशिषि तुह्योस्तातङ् ॥ ४ । २ । ११९ ॥

वा ॥ आयुष्मान् भवतु भवताद् वा भवान्। भवताम्। भवन्तु ॥

अत प्रत्ययाल्लुक् ॥ ४ । २ । ८५ ॥

धातो पराद्धेः ॥ भव । भवतात् । भवतम् । भवत । आशिषि, श्रेयस्वी भवतात् सौम्य । भवानि । भवाव । भवाम ॥

**अनद्यतने ह्यस्तनी ॥ ५ । २ । ७ ॥**

भूतेऽर्थेवर्तमानाद्धातो' ॥

**अड्धातोरादिर्ह्यस्तन्या चामाङा ॥ ४ । ४ । २९ ॥**

अद्यतनीक्रियातिपत्त्योश्च ॥ अभवत् श्रो जिनार्चा । अभवताम् । अभवन् । अभव । अभवतम् । अभवत । अभवम् । अभवाव । अभवाम ॥

**अद्यतनी ॥ ५ । २ । ४ ॥**

भूतार्थाद्धातो ॥

**सिजद्यतन्याम् ॥ ३ । ४ । ५३ ॥**

धातो ॥ इकारचकारौ विशेषणार्थौ ॥

**पिबैतिदाभूस्थ सिचो लुप्परस्मै न चेट् ॥ ४ । ३ । ६६ ॥**

लुप्योगे ॥ देति दासज्ञा धातव ॥

**भवते सिज्लुपि ॥ ४ । ३ । १२ ॥**

न गुण. ॥ अडागमे, अभूत् अत्र वृष्टि.। अभूताम् । अभू-अन् इति स्थिते धातोरिवर्णोवर्णस्येत्युवादेशे ॥

**भुवो व परोक्षाद्यतन्यो ॥ ४ । २ । ४३ ॥**

उपान्त्यस्योत् ॥ अभूवन् । अभू । अभूतम् । अभूत । अभूवम् । अभूव । अभूम ॥

**परोक्षे ॥ ५ । २ । १२ ॥**

भूतानद्यतने वर्तमानाद्धातोः परोक्षा ॥ भू-णव् इति स्थिते ॥

आसन्नः ॥ वृषभाजितौ । लोकात् सहिना । दधीदम् । भानूदय । पितॄषभः । क्लृकार ॥

## ऋलृति ह्रस्वो वा ॥ १ । २ । २ ॥

समानानाम् ॥ बाल ऋश्यः । पक्षे बालर्श्य इत्यादि । नदि ऋच्छति । नद्यृच्छति । ह्रस्वविधाने कार्यान्तरं न स्यादिति ह्रस्वस्यापि ह्रस्व ॥

## लृत ऋलृ ऋलृभ्यां वा ॥ १ । २ । ३ ॥

ॠकारः । पक्षे लृ ऋकारः । ऋकारः । लॄकारः । पक्षे लृ लृकारः । लॄकारः ॥

## ऋतो वा तौ च ॥ १ । २ । ४ ॥

ऋत ऋलृभ्यां सह यथासङ्ख्य ॠलॄइत्येतौ वा स्यातां तौ च ऋकारलृकारौ ऋलृभ्या सह वा स्याताम् । ऋता पितृृषभः । पक्षे पितृ ऋषभः । पितॄषभ' । लृता । होतॄकारः पक्षे होतृलृकार' । होतॄकारः । तौ च पितृषभः होतृलृकारः पक्षे पूर्ववत् ॥

## ऋस्तयो. ॥ १ । २ । ५ ॥

तयोः पूर्वस्थानिनोर्लृकारऋकारयोर्यथासङ्ख्य ऋलृभ्यां सह ऋरति दीर्घःस्यात् । ऋषभः । होतॄकार' ॥

## अवर्णस्येवर्णादिनैदोदरल् ॥ १ । २ । ६ ॥

यथासङ्ख्यमनुदेशः समसंख्याकानाम् ॥ ×

देवेन्द्र । तवोदकम् । महर्द्धि' । ह्रादर्हेत्यादिना द्वित्वे महर्द्द्धि ॥

## धुटो धुटि स्वे वा ॥ १ । ३ । ४८ ॥

व्यञ्जनात् परस्य लुक् ॥ इति लुकि द्वित्वाभावे वा एकदम् ।

एकधम् । एकदेशेऽपि लुकि पेवन्नैकधम् । महर्धिः । तवल्कार. १ ॥

अदीर्घाद् विरामैकव्यञ्जने ॥ १ । ३ । ३२ ॥

स्वराद्रहम्यरवर्जस्यान्तु द्वे वा ॥ तवल्ल्कार २ ॥

अञ्वर्गस्यान्तस्थातः ॥ १ । ३ । ३३ ॥

अनु द्वे वा ॥ तवल्कारः ३ । तवल्ल्कार ४ ॥

ऋणे प्रदशार्णवसनकम्बलवत्सरवत्सतरस्यार् ॥१।२।७॥

अवर्णस्य ऋता ॥ प्रार्णम् । ऋणार्णम् ॥

ऋते तृतीयासमासे ॥ १ । २ । ८ ॥

ऋता अवर्णस्यार् ॥ शीतार्तः । तृतीयेति किम् ? परमर्तः । समासे किम् ? दुःखेनर्तः ॥

ऋत्यारुपसर्गस्य ॥ १ । २ । ९ ॥

अवर्णस्य धातौ ऋता ॥ प्रार्छति ॥

नाम्नि वा ॥ १ । २ । १० ॥

उपसर्गावर्णस्य ऋता ऋति धातावार् ॥ प्रार्षभीयति । प्रर्षभीयति ॥

लृत्याल्वा ॥ १ । २ । ११ ॥

उपसर्गावर्णस्य लृता नाम्नि धातौ ॥ उपाल्कारीयति । उपल्कारीयति ॥

ऐदौत्सन्ध्यक्षरैः ॥ १ । २ । १२ ॥

अवर्णस्य ॥ तवैषा । तवैन्द्री । तवौदनः । तवौपगवः ॥

ऊटा ॥ १ । २ । १३ ॥

अवर्णस्यौत् ॥ धौतः । धौतवान् ॥

प्रस्यैषैष्योढोढ्यूहे स्वरेण ॥ १ । २ । १४ ॥

ऐदौतौ ॥ प्रैष । प्रैष्यः । प्रौढः । प्रौढिः । प्रौह ॥

स्वैरस्वैर्यक्षौहिण्याम् ॥ १ । २ । १५ ॥

अवर्णस्य स्वरेण ऐदौतौ ॥ स्वैरः । स्वैरी । अक्षौहिणी सेना ॥

अनियोगे लुगेवे ॥ १ । २ । १६ ॥

अवर्णस्य ॥ इहेव तिष्ठ नियोगे तु । इहैव तिष्ठ ॥

वौष्ठौतौ समासे ॥ १ । २ । १७ ॥

अवर्णस्य लुक् ॥ बिम्बोष्ठी । बिम्बौष्ठी । स्थूलोतुः । स्थूलौतुः । समासे इति किम्? । हे राजपुत्रौष्ठ पश्य ॥

ओमाङि ॥ १ । २ । १८ ॥

अवर्णस्य लुक् ॥ अद्योम् । आ ऊढा ओढा । अद्योढा ॥

उपसर्गस्यानिणेधेदोति ॥ १ । २ । १९ ॥

धातौ लुक् ॥ प्रेलयति । प्रोखति । अनिणेधेति किम्? । उपैति । प्रैधते ॥

वा नाम्नि ॥ १ । २ । २० ॥

एदोति धातौ उपसर्गावर्णस्य लुक् ॥ उपेडकीयति । उपैडकीयति । प्रोषधीयति । प्रौषधीयति । दधि अत्र इति स्थिते ॥

इवर्णादेरस्वे स्वरे यवरलम् ॥ १ । २ । २१ ॥

दध्य् अत्र इति जाते, अदीर्घाद्विरामेति द्वित्वे प्राप्ते ।

स्थानीवावर्णविधौ ॥ ७ । ४ । १०९ ॥

आदेशः ॥

**स्वरस्य परे प्राग्विधौ ॥ ७ । ४ । ११० ॥**

वर्णविध्यर्थमिदम् । आदेशः परनिमित्तकः स्थानीव ॥ इति स्थानिवद्भावे प्राप्ते ॥

**न सन्धिङीयक्किद्विदीर्घासद्विधावस्क्लुकि ॥७।४।१११॥**

आदेशः स्थानीव ॥ इति पूर्वेणातिप्रसक्तस्य स्थानिवद्भावस्य निषेधः । दध्य् अत्रेति जाते ॥

**तृतीयस्तृतीयचतुर्थे ॥ १ । ३ । ४९ ॥**

धुट ॥

**पदस्य ॥ २ । १ । ८९ ॥**

संयोगान्तस्य लुक् ॥ स च परे स्यादिविधौ चासन् द्रष्टव्य । इति यलोपे प्राप्ते, बहिरङ्गस्य यस्यासिद्धत्वात्र ॥

**ततोऽस्याः ॥ १ । ३ । ३४ ॥**

अव्वर्गादन्तस्थाया द्वे वा ॥ इति यद्वित्वे चातूरूप्यम् । दध्यत्र १। दध्य्यत्र २ । दद्ध्यत्र ३। दद्ध्य्यत्र ४। पञ्चमीव्याख्याने ऽब्वादय । पथ्वत्र । पित्रर्थ । लाकृति ॥

**हादर्हस्वरस्यानु न वा ॥ १ । ३ । ३१ ॥**

स्वरात् परात् द्वित्वम् ॥ अर्क १। ब्रह्म्मा २। अन्विति किम् ?। मोर्ण्णुनाव । दर्शनमित्यत्र द्वित्वे प्राप्ते ॥

पुत्रस्यादिन्पुत्रादिन्याक्रोशे ॥ १ । ३ । ३८ ॥ तस्य न द्वित्वम् ॥ पुत्रादिनी त्वमसि पापे । पुत्रपुत्रादिनी भव । आक्रोशे किम् ? । पुत्रादिनी २ शिशुमारी । पुत्रपुत्रादिनी नागी ॥ (पङ्क्ति १६ पछी.)

शिटो द्वित्वम् ॥ दर्शनम् ॥

## ह्रस्वोऽपदे वा ॥ १ । २ । २२ ॥

इवर्णादीनामस्वे स्वरे निमित्तनिमित्तिनौ ॥ नदि एषा । ह्रस्वविधानादसन्धिः । अत एव ह्रस्वस्यापि ह्रस्वः । नद्येषा । अपदे किम् ? । नद्यौ । नद्यर्थ. ॥

## एदैतोऽयाय् ॥ १ । २ । २३ ॥

स्वरे ॥ नयनम् । नायक ॥

## ओदौतोऽवाव् ॥ १ । २ । २४ ॥

स्वरे ॥ लवनम् । लावक ॥

## स्वरे वा ॥ १ । ३ । २४ ॥

अवर्णभोभगोऽघोभ्यः परयो॰ पदान्तस्थयोर्वयर्योर्लुक् ॥ लुक्य-सन्धि । पट इह । पटविह । त इह । तयिह ॥

## य्यक्ये ॥ १ । २ । २५ ॥

ओदौतोः अवावौ प्रत्यये ॥ गव्यम् । नाव्यति । अक्य इति किम् ? । औयत । प्रत्यये किम् ? । गोयूतिः । क्रोशद्वये पृषोदरादित्वात् गव्यूतिरिति ॥

## क्षय्यजय्यौ शक्तौ ॥ ४ । ३ । ९० ॥

शक्तौ किम् ? । क्षेयम् । जेयम् ॥

## क्रय्य. क्रयार्थे ॥ ४ । ३ । ९१ ॥

क्रयाय प्रसारितेऽर्थे क्रय्यः । अन्यत्र क्रेयः ॥

**ऋतोरस्तद्धिते ॥ १ । २ । २६ ॥**

यादौ ॥ पित्र्यम् । तद्धित इति किम् ? । कार्यम् ॥

**एदोत पदान्तेऽस्य लुक् ॥ १ । २ । २७ ॥**

तेऽत्र । पटोऽत्र । पदान्ते किम् ? । नयनम् ॥

**इतावतो लुक् ॥ ७ । २ । १४६ ॥**

अव्यक्तानुकरणस्यानेकस्वरस्य ॥ पटिति ॥

**न द्वित्वे ॥ ७ । २ । १४७ ॥**

पटत्पटदिति ॥

**तो वा ॥ ७ । २ । १४८ ॥**

द्वित्वेऽतो लुक् । पटत्पटेति ॥

**धुटस्तृतीयः ॥ २ । १ । ७६ ॥**

पदान्ते ॥ पटत्पटदिति ॥

**गोर्नाम्न्यवोऽक्षे ॥ १ । २ । २८ ॥**

पदान्तस्यस्यौत ॥ गवाक्षः । नाम्नीति किम् ? । गोऽक्षाणि ॥

**स्वरे वाऽनक्षे ॥ १ । २ । २९ ॥**

गोरोतः पदान्तस्थस्यावः ॥ गवाग्रम् ॥ गोऽग्रम् । अनक्षे किम् ? गोऽक्षम् । ओत किम् ? । चित्रग्वर्थं ।

**इन्द्रे ॥ १ । २ । ३० ॥**

गोरोतः पदान्तस्थस्य स्वरेऽवः ॥ गवेन्द्रः ॥

## वात्यसन्धिः ॥ १ । २ । ३१ ॥

गोरोतः पदान्तस्थस्य ॥ गो अग्रम् । गोऽग्रम् । गवाग्रम् ॥

इति श्रीतपोगच्छाचार्यविजयदेवसूरिनिजयसिंहसूरिपट्टपरम्परा-प्रतिष्ठितगीतार्थत्वादिगुणोपेतवृद्धिचन्द्रापरनामवृद्धिविजयचरणकमल-मिलिन्दायमानान्तेवासिसर्वविभशास्त्रीयतपोगच्छाचार्यभट्टारकश्रीविजय-नेमिसूरिविरचितायां लघुहेमप्रभाया स्वरसन्धिः ॥

---

## ॥ अथासन्धिप्रकरणम् ॥

---

### न सन्धिः ॥ १ । ३ । ५२ ॥

उक्तो वक्ष्यमाणश्च विरामे ॥ दधि अत्र । तद् लुनाति ॥

### प्लुतोऽनितौ ॥ १ । २ । ३२ ॥

स्वरेऽसन्धिः ॥ देवदत्त ३ अत्र न्वसि । अनिताविति किम् ? । सुश्लोकेति ॥

### सम्मत्यसूयाकोपकुत्सनेष्वाद्यामन्त्र्यमादौ स्वरे-ष्वन्त्यश्च प्लुतः ॥ ७ । ४ । ८९ ॥

वाक्यस्य द्विः द्वित्वे वा ॥ माणवक ३ माणवक २ आर्य खल्वसि । रिक्त ते आभिरूप्यम् । इदानीं ज्ञास्यसि जाल्म । रिक्ता ते शक्तिरिति वा । आदाविति किम् ? । भव्य खल्वसि माणवक ।

### भर्त्सने पर्यायेण ॥ ७ । ४ । ९० ॥

वाक्यस्य यदामन्त्र्य तद्द्विः ॥ द्वित्वे च पूर्वोत्तरपदयोः स्वरेष्वन्त्य

प्लुतो वा ॥ चौर ३ चौर चौर चौर ३ चौर चौर घातयिष्या-मि त्वाम् ।

स्याद्धेः साकाङ्क्षस्याङ्गेन ॥ ७ । ४ । ९१ ॥

भर्त्सनार्थस्य वाक्यस्य स्वरेष्वन्त्य स्वरस्याप्यन्त्यस्य पदस्य वाक्यान्तराकाङ्क्षस्य अङ्गेन युक्तस्याद्धेः प्लुतो वा ॥ अङ्ग कूज ३ अङ्ग कूज, इदानीं ज्ञास्यसि जाल्म । साकाङ्क्षस्येति किम ? अङ्ग पच ।

क्षियाशी प्रैषे ॥ ७ । ४ । ९२ ॥

एतद्वृत्तेर्वाक्यस्य स्वरेष्वन्त्य स्वरस्याप्यन्त्यस्य वाक्यान्तरा-काङ्क्षस्याद्धेः प्लुतो वा ॥ स्वयं हि रथेन याति ३ याति वा उपाध्याय पदाति गमयति । सिद्धान्तमध्येषीष्ठा ३ अध्येषीष्ठा वा तर्कं च तात । कट च कुरु ३ कुरु वा ग्रामं च गच्छ ॥

चितीवार्थे ॥ ७ । ४ । ९३ ॥

प्रयुक्ते वाक्यस्य स्वरेष्वन्त्य स्वर प्लुतो वा ॥ अग्निश्चिच्छाया ३ त् (?) ॥

प्रतिश्रवणनिगृह्याऽनुयोगे ॥ ७ । ४ । ९४ ॥

वाक्यस्य स्वरेष्वन्त्य स्वर प्लुतो वा ॥ गां मे देहि भो हन्त ते ददामि ३ (?) अद्य श्राद्धमित्यात्थ ३ (२) ॥

विचारे पूर्वस्य ॥ ७ । ४ । ९५ ॥

विचार संशयस्तद्विषये संशय्यमानस्य यत्पूर्वं तस्य स्वरेष्वन्त्य

स्वर प्लुतो वा ॥ अहिर्नु ३ (२) रज्जुर्नु ।

## ओम प्रारम्भे ॥ ७ । ४ । ९६ ॥

स्वरेष्वन्त्यः स्वरः प्लुतो वा ॥ अकार्षीः कट मैत्र । अकार्ष हि ३ हि वा ॥

## हेः प्रश्नाख्याने ॥ ७ । ४ । ९७ ॥

वाक्यस्य स्वरेष्वन्त्यः स्वर प्लुतो वा ॥ अकार्षी कटमैत्र । अकार्ष हि ३ हि वा।

## प्रश्ने च प्रतिपदम् ॥ ७ । ४ । ९८ ॥

प्रश्नाख्याने वाक्यस्य स्वरेष्वन्त्य' स्वरः प्लुतो वा। अगम ३ पूर्वा ३ न् ग्रामा ३ न् मैत्र ३ । अगमः पूर्वान्ग्रामान्मैत्र । अगम' ३ पूर्वा ३ न् ग्रामा ३ न् मैत्र ३ । अगम पूर्वान्ग्रामान्मैत्र ।

## दूरादामन्त्र्यस्य गुरुर्वैकोऽनन्त्योऽपि लनृत् ॥ ७ । ४ । ९९ ॥

वाक्यस्य स्वरेष्वन्त्यः स्वर, प्लुतो वा ॥ आगच्छ भो देवदत्त ३ (२) भवत् न् पिब दे ३ वदत्त देवद ३ त्त देवदत्त वा । आगच्छ भो. वत्स ३ प्ताशिख वत्सप्ताशिख वा । अनृदितिकिम् ? । कृष्णमि ३ त्र (२) ॥

## हेहैष्वेषामेव ॥ ७ । ४ । १०० ॥

दूरादामन्त्र्यस्य स्वर प्लुतो वा ॥ हे ३ मैत्र आगच्छ ॥ आगच्छ हे ३ मैत्र आगच्छ मैत्र हे । एवं हैशब्देऽपि ॥

## अस्त्रीशूद्रे प्रत्यभिवादे भोगोत्रनाम्नो वा ॥ ७ । ४ । १०१ ॥

वर्तमानस्य वाक्यस्य स्वरेष्वन्त्यः स्वर आमन्त्र्यस्यांश प्लुत ॥ अभिवादये मैत्रोऽहं भोः आयुष्मानेधि भो ३ । (२) अभिवादयेऽहं गार्ग्यो भो । आयुष्मानेधि गार्ग्य ३ ( २ ) । राजन्यविशोरपि गोत्रत्वमेव । अभिवादये मैत्रोऽहं भो आयुष्मानेधि मैत्र ३ (२) । स्त्रीशूद्रवर्जन किम् ? । अभिवादये गार्ग्यहं भो. आयुष्मती त्वं भव गार्गि, अभिवादये तुपजकोऽहं कुशल्यसि तुपजक ॥

## प्रश्नार्चाविचारे च सन्धेयसन्ध्यक्षरस्यादिदुत्पर ॥ ७ । ४ । १०२ ॥

प्रत्यभिवादे वर्त्तमानस्य वाक्यस्य स्वरेष्वन्त्यस्वरस्य प्लुतो भवन् ॥ अगमः३ पूर्वा ३ न् ग्रामा ३ न् अग्निभूता ३ इ । पटा ३ उ । शोभन खल्वसि अग्निभूता ३ इ । पट । ३ ऽ । शोभन खल्वसि अग्निभूता ३ इ । पटा ३ उ । वक्तव्य किं निर्ग्रन्थस्य सागारिका ३ इ । उतानागारिके । आयुष्मानेधि अग्निभूता ३ इ । सन्धेयेति किम् ? । कच्चि ३ त् कुशल ३ म् भवत्योः ३ कन्ये ३ ॥

## तयोर्व्वौ स्वरे संहितायाम् ॥ ७ । ४ । १०३ ॥

तयो प्लुताकारात्परयोरिदुतोरित्यर्थ. ॥ अगम' ३ अग्निभूता ३ यत्रागच्छ । अगम ३ पटावत्रागच्छ । संहितायामिति किम् । ? अग्ना ३ इ इन्द्रम् ॥

## इ ३ वा ॥ १ । २ । ३३ ॥

प्लुतः स्वरेऽसन्धिः ॥ लुनीहि ३ इति । लुनीहीति ॥

ईदूदेद्द्विवचनम् ॥ १ । २ । ३४ ॥

स्वरेऽसन्धिः ॥ मुनी इह । साधू एतौ । माले इमे । पचेते इति ॥

अदो मुमी ॥ १ । २ । ३५ ॥

स्वरे असन्धी ॥ अमुमुईच । अमी अश्वाः ॥

चादिः स्वरोऽनाङ् ॥ १ । २ । ३६ ॥

स्वरेऽसन्धिः ॥ अ अपेहि । इ इन्द्र पश्य । उ उत्तिष्ठ । आ एवं किल मन्यसे । आ एवं नु तत् । अनाङिति किम् ? । ओष्णम् । ओष्णमोष्णम् । "ईषदर्थे क्रियायोगे मर्यादाभिविधौ च यः । एतमातं ङितं विद्याद्वाक्यस्मरणयोरङित् ॥ १ ॥"

ओदन्तः ॥ १ । २ । ३७ ॥

चादिः स्वरेऽसन्धिः ॥ अहो अत्र ॥

सौ नवेतौ ॥ १ । २ । ३८ ॥

असन्धिः ॥ पटो इति । पटविति ॥

ऊँ चोञ् ॥ १ । २ । ३९ ॥

उञ् चादिरितौ वाऽसन्धिरसत्यौ चोञ् ऊँ वा ॥ उ इति । ऊँ इति । विति ॥ सप्तम्यर्थे पर्यवसन्नस्येदूदन्तस्य सन्धिर्न भवतीति केचित् । तन्मते, गौरी अधिश्रित । मामकी तनू इति । छान्दसत्वात्सप्तम्या लुक्

अऊवर्गात् स्वरे वोऽसन् ॥ १ । २ । ४० ॥

स्थ् वा ॥ कुड्वास्ते । कुड्डु आस्ते । असत्वाद् द्वित्वम् ॥

अइउवर्णस्यान्तेऽनुनासिकोऽनीदादे. ॥ १ । २ । ४१ ॥

वा ॥ सामँ२ । कुमारीँ २ । मधुँ २ । अनीदादेः किम् ? अमी । अमो । गिरू ॥

इति श्रीतपोगच्छाचार्यविजयदेवसूरिविजयसिंहसूरिपट्टपरम्परा प्रतिष्ठितगीतार्थत्वादिगुणोपेतवृद्धिचन्द्रापरनामवृद्धिविजयचरणकमलमिलिन्दायमानान्तेवासिसविग्नशाखीयतपोगच्छाचार्यभट्टारकश्रीविजयनेमिसूरिविरचितायां लघुहेमप्रभायामसन्ध्यधिकार ॥

॥ अथ व्यञ्जनसन्धि ॥

तृतीयस्य पञ्चमे ॥ १ । ३ । १ ॥

पदान्तस्थस्यानुनासिको वा ॥ ककुम्मण्डलम् । ककुब्मण्डलम् ॥

प्रत्यये च ॥ १ । ३ । २ ॥

पदान्तस्थस्य तृतीयस्य पञ्चमे नित्यमनुनासिक ॥ वाङ्मयम् ॥

ततो हश्चतुर्थ. ॥ १ । ३ । ३ ॥

पदान्तस्थात् पूर्वसवर्णो वा ॥ वाग्घीन । वाग्हीन. ॥

अघोषे प्रथमोऽशिट. ॥ १ । ३ । ५० ॥

धुटः ॥ भेत्ता ॥

**प्रथमादधुटि शश्छ ॥ १ । ३ । ४ ॥**

पदान्तस्थाद्वा ॥ वाक्छूरः । वाक्शूर ॥

**नोऽप्रशानोऽनुस्वारानुनासिकौ च पूर्वस्याधुट्-परे ॥ १ । ३ । ८ ॥**

पदान्तस्थस्य चटते सद्वितीये शषसाः ॥ भवांश्चरः । भवाँश्चरः । भवांश्छयति २ । भवांष्टक २ । भवांष्ठकारः २ । भवांस्तनु २ । भवां-स्थुडति २ । अप्रशान इति किम् ? । प्रशान् चरः ॥

**पुमोऽशिट्यघोषेऽख्यागि रः ॥ १ । ३ । ९ ॥**

अधुट्परेऽनुस्वारानुनासिकौ च पूर्वस्य ॥

**पुस. ॥ २ । ३ । ३ ॥**

रस्य कखपफेषु सः॥ पुंस्कोकिलः २। पुंस्पुत्र २॥ अख्यागीति किम् ?। पुंख्यातः ॥

**नॄन. पेषु वा ॥ १ । ३ । १० ॥**

रोऽनुस्वारानुनासिकौ च पूर्वस्य ॥

**र कखपफयो. ≍ क ≍ पौ ॥ १ । ३ । ५ ॥**

पदान्तस्थस्य वा ॥ नॄं ≍ पाहि । नॄँ ≍ पाहि ॥

**र पदान्ते विसर्गस्तयो ॥ १ । ३ । ५३ ॥**

विरामाघोषयो ॥ नॄं पाहि । नॄँ पाहि । नॄन् पाहि ॥

**शषसे शषस वा ॥ १ । ३ । ६ ॥**

पदान्तस्यस्य रस्य ॥ कऽनेते । क नेते । कस्पण्डः २। कस्साधुः २॥

## चटते सद्वितीये ॥ १ । ३ । ७ ॥

पदान्तस्यस्य रस्य शपसा नित्यम् ॥ कश्चर । कश्छत्र । कष्ट । कष्ठ । कस्त । कस्थ ॥

## द्विः कान कानि सः ॥ १ । ३ । ११ ॥

अनुस्वारानुनासिकौ च पूर्वस्य ॥ कांस्कान् । कँास्कान् । द्विरिति किम् ? । कान् कान् पश्यति ॥

## तौ मुमो व्यञ्जने स्वौ ॥ १ । ३ । १४ ॥

म्वागमस्य पदान्तस्यस्य च मस्य व्यञ्जने मस्यैव स्वावनुस्वारानुनासिकौ क्रमेण ॥ चक्रम्यते । चङ्क्रम्यते । त्वं करोषि । त्वङ्करोषि । कंव । कञ्व ॥

## मनयवलपरे हे ॥ १ । ३ । १५ ॥

पदान्तस्यस्य मस्यानुस्वारानुनासिकौ स्वौ॥ किं ह्मलयति। किम् ह्मलयति । किं ह्नुते । किन् ह्नुते । किंह्य । किँय्ह्य । किं ह्वलयति। किँव् ह्वलयति । किं ह्लादते । किँल्ह्लादते ॥

## सम्राट् ॥ १ । ३ । १६ ॥

निपात्यते ॥ सम्राट् ॥

## स्सटि समः ॥ १ । ३ । १२ ॥

म । अनुस्वारानुनासिकौ च पूर्वस्य ॥ संस्कर्ता । सँस्स्कर्ता ॥

## लुक् ॥ १ । ३ । १३ ॥

समः स्सटि ॥ सस्कर्त्ता ॥

ङ्णो. कटावन्तौ शिटि न वा ॥ १ । ३ । १७ ॥

पदान्तस्थयोः॥ प्राङ्क्छेते। प्राङ्क् शेते। प्राङ् शेते। सुगण्ट्छेते। सुगण्ट् शेते। सुगण् शेते ॥

शिट्याद्यस्य द्वितीयो वा ॥ १ । ३ । ५९ ॥

प्राङ्ख् शेते २ ॥

ङ्नः सः त्सोऽश्चः ॥ १ । ३ । १८ ॥

पदान्तस्याद्वा ॥ षड्त्सीदन्ति । षड्सीदन्ति । भवान्त्साधु.। भवान्साधु । अश्च इति किम् ? । षट्श्च्योतन्ति ॥

न शि ञ्च् ॥ १ । ३ । १९ ॥

पदान्तस्यस्य वा ॥ भवाञ्छूर । भवाञ्च् शूरः। भवाञ् शूरः। भवाञ्छूर । अश्च इत्येव ? । भवाञ्श्च्योतति ॥

ह्रस्वान् ङ्णनो द्वे ॥ १ । ३ । २७ ॥

पदान्तस्यस्य स्वरे ॥ क्रुङ्ङिह । सुगण्णिह । कुर्वन्नास्ते ॥

स्वरेभ्य. ॥ १ । ३ । ३० ॥

छस्य द्वे॥ इच्छति ॥

अनाङ्माङो दीर्घाद्वाच्छ. ॥ १ । ३ । २८ ॥

पदान्तस्थाद् द्वे ॥ कन्याच्छत्रम्। कन्याछत्रम्। अनाङ्माङ इति किम् ? । आच्छाया । माच्छिन्दत् ॥

प्लुताद्वा ॥ १ । ३ । २९ ॥

पदान्तस्थाद् दीर्घाच्छस्य द्वे ॥ आगच्छ भो इन्द्रभूते ३ च्छत्रमानय, पक्षे छत्रमानय ॥

शिट प्रथमद्वितीयस्य ॥ १ । ३ । ३५ ॥

द्वे वा ॥ त्व क्करोपि ॥ त्व करोषि । त्व क्खनसि । त्व खनसि ।

ततः शिट ॥ १ । ३ । ३६ ॥

द्वे वा । तच्छ्श्शेते । तच्छ् शेते ॥

म्नां धुड्वर्गेऽन्त्योऽपदान्ते ॥ १ । ३ । ३९ ॥

निमित्तस्यैवाद्य ॥ गन्ता । कम्पिता ॥

शिड्हेऽनुस्वार ॥ १ । ३ । ४० ॥

अपदान्तस्थानां म्नामद्य ॥ पुंसि । बृंहणम् ॥

उद स्थास्तम्भ स. ॥ १ । ३ । ४४ ॥

लुक् ॥ उत्थाता । उत्तम्भिता ॥

तवर्गस्य श्चवर्गष्टवर्गाभ्यां योगे चटवर्गौ ॥ १ । ३ । ६० ॥

यथासङ्ख्यम् ॥ तच् शेते । भवाञ्शेते । तचारु । पेष्टा । तट्टीका । ईट्टे ॥

सस्य शषौ ॥ १ । ३ । ६१ ॥

श्चवर्गष्टवर्गाभ्यां योगे ॥ श्चोतति । टोप्पु । रम्भाण्पि ॥

न शात् ॥ १ । ३ । ६२ ॥

तवर्गस्य चवर्ग ॥ अश्नाति । प्रश्न ॥

पदान्तादृटवर्गादनाम्नगरीनवते ॥ १ । ३ । ६३ ॥

तवर्गस्य सस्य च चटवर्गौ न ॥ षण्नयाः । षट्सु । अनाम्नगरीनवतेरितिकिम् । षण्णाम् । षण्णगरी । षण्णवति ॥

पि तवर्गस्य ॥ १ । ३ । ६४ ॥

पदान्तस्थस्य टवर्गो न ॥ तीर्थकृत् षोडशः शान्तिः

लि लौ ॥ १ । ३ । ६५ ॥

पदान्तस्थस्य तवर्गस्य ॥ तल्लूनम् । भवाल्लुँनाति

( पंक्ति ६ ठीमा 'ल्लुँनाति' पछी व्यञ्जनात्पञ्चमान्तस्थाः सरूपे वा ॥ १ । ३ ... लुक् । मुद्गौ । अ... स्य । आदित्त्य ॥

इति श्रीतपोगच्छाचार्यविजयदेवसूरिविजयसिंहसूरिपट्टपरम्परामतिष्ठितगीतार्थत्वादिगुणोपेतवृद्धिचन्द्रापरनामवृद्धिविजयचरणकमलामिलिन्दायमानान्तेवासिसंविग्नशाखीयतपोगच्छाचार्यभट्टारकश्रीविजयनेमिसूरिविरचितायां लघुहेमप्रभायां व्यञ्जनसन्धिः ॥

---

## ॥ अथ रेफसन्धिः ॥

---

रघ्यागि ॥ १ । ३ । ५४ ॥

पदान्तस्थस्य रस्य विसर्ग एव ॥ कः स्यात् ॥

शिट्यघोषात् ॥ १ । ३ । ५५ ॥

पदान्तस्थस्य रस्य विसर्ग एव ॥ वासः क्षौमम् । अद्भिः प्सातम् ॥

व्यत्यये लुग्वा ॥ १ । ३ । ५६ ॥

शिटि परेऽघोषे सति पदान्तस्य रस्य लुग्वा ॥ चक्षुश्च्योतति २ ॥

नमस्पुरसो गते कखपफि रः सः ॥ २ । ३ । १ ॥

नमस्कृत्य। पुरस्कृत्य। गतेः किम्?। नमः कृत्वा। साक्षादादि क्ष्व्यर्थे नमसो वा गतिसंज्ञा॥

## तिरसो वा॥ २।३।२॥

गतेरस्य कखपफि सः॥ तिरस्कृत्य। तिरःकृत्य। गतेः किम्?। तिरःकृत्वा काष्ठं गतः॥

## शिरोऽधसःपदे समासैक्ये॥ २।३।४॥

- रः सः॥ शिरस्पदम्। अधस्पदम्। समासे किम्?। शिरः पदम्। ऐक्य इति किम्?। परमशिरः पदम्॥

## अतः कृकमिकंसकुम्भकुशाकर्णीपात्रेऽनव्ययस्य॥ २।३।५॥

रः सः समासैक्ये॥ अयस्कृत्। यशस्कामः। अयस्कंस। पयस्कुम्भ। अयस्कुशा। अयस्कर्णी। अयस्पात्रम्॥

## प्रत्यये॥ २।३।६॥

अनव्ययस्य रस्य पाशकल्पके सः॥ पयस्पाशम्। पयस्कल्पम्। यशस्कम्॥

## रो काम्ये॥ २।३।७॥

अनव्ययस्य रोरेव सः॥ पयस्काम्यति। नियमः किम्? अहः काम्यति॥

## नामिनस्तयोः षः॥ २।३।८॥

सर्पिष्पाशम्। सर्पिष्काम्यति। तयोरिति किम्?। मुनि

करोति २। गीः काम्यति २ ॥

निर्दुर्बहिराविष्प्रादुश्चतुराम् ॥ २ । ३ । ९ ॥

रस्य कखपफि षः ॥ निष्कृतम् इत्यादि। बहुवचनात्रिसृदुसोरपि॥

सुचो वा ॥ २ । ३ । १० ॥

रस्य कखपफि षो वा ॥ द्विष्करोति ३ । चतुष्फलति ३ ॥

वेसुसोऽपेक्षायाम् ॥ २ । ३ । ११ ॥

स्थानिनिमित्तयोरस्य कखपफि ष ॥ सर्पिष्करोति ३ । धनुष्खादति ३ । अपेक्षाया किम् ? । परमसर्पिः कुण्डम् २ ॥

नैकार्थेऽक्रिये ॥ २ । ३ । १२ ॥

पदे यत्कखपफ तत्र परे इसुस्प्रत्ययान्तस्य रस्य षः॥ सर्पिः कालकम् ३। यजु पीतकम् २। एकार्थ इति किम् ?। सर्पिष्कुम्भे ३। अक्रिय इति किम् ? । सर्पिष्क्रियते ३ ॥

समासेऽसमस्तस्य ॥ २ । ३ । १३ ॥

पूर्वेण इसुस्प्रत्ययान्तस्य र कखपफि ष. ॥ सर्पिष्कुम्भः । धनुष्फलम् । समास इति किम् ? । तिष्ठतु सर्पिः पिब त्वमुदकम् । असमस्तस्येति किम् ? । परमसर्पि कुण्डम् ॥

भ्रातुष्पुत्रकस्कादय. ॥ २ । ३ । १४ ॥

साधव ॥ भ्रातुष्पुत्र । परमधनुष्पात्रम् । कस्कः । कौतस्कुत । बहुवचनमाकृतिगणार्थम् ॥

वाहर्पत्यादय ॥ १ । ३ । ५८ ॥

महर्पतिः ॥ अह॰ पाति ७ । प्रचेता राजन् । प्रचेतो राजन् ॥

इति श्रीतपोगच्छाचार्यविजयदेवसूरिविजयसिंहसूरिपट्टपरम्पराप्रतिष्ठितगीतार्थत्वादिगुणोपेतश्रीवृद्धिचन्द्रापरनामवृद्धिविजयचरणकमलमिलिन्दायमानान्तेवासिसंविग्नशाखीयतपोगच्छाचार्यभट्टारकश्रीविजयनेमिसूरिविरचितायां लघुहेमप्रभायां रेफसन्धिः ॥

---

## ॥ अथ स्यादिसन्धिः ॥

---

### सो रुः ॥ २ । १ । ७२ ॥

पदान्ते ॥

### अतोऽतिरोरुः ॥ १ । ३ । २० ॥

देवोऽर्च्यः ॥

### घोषवति ॥ १ । ३ । २१ ॥

अतः परस्य पदान्तस्य रोरुः ॥ धर्मो जेता । रोरित्युकारानुबन्धान्नेह । प्रातरत्र । प्रातर्गच्छ ॥

### अवर्णभोभगोअघोर्लुगसन्धिः ॥ १ । ३ । २२ ॥

पदान्तस्यस्य रोर्घोषवति ॥ देवा यान्ति । भो यासि । भगो हस । अघो वद ॥

### व्योः ॥ १ । ३ । २३ ॥

अवर्णात्परयोः पदान्तस्ययोर्घोषवति लुक् ॥ सचासन्धिः । वृक्ष याति । अव्य याति ॥

रोर्यः ॥ १ । ३ । २६ ॥

अवर्णभोभगोऽघोभ्य स्वरे ॥ कयास्ते । भोयत्र । भगोयत्र । अघोयत्र ॥ स्वरे वेति पक्षे लोपे क आस्ते इत्यादि ॥

अस्पष्टाववर्णात्त्वनुञि वा ॥ १ । ३ । २५ ॥

अवर्णभोभगोऽघोभ्यः परयो पदान्तस्थयोर्व्योर्वँयौ स्वरे॥ पटवुँ। असावुँ ॥ कयुँ । देवायुँ ॥ भोयँत्रेत्यादि । पटविह २ । तयिह २ । असाविन्दुः २ ।

अह्नः ॥ २ । १ । ७४ ॥

पदान्ते रुः ॥ स चासन् परे स्यादि विधौ च पूर्वस्मिन् । दीर्घाहा निदाघः । अहोभ्याम् ॥

रो लुप्यरि ॥ २ । १ । ७५ ॥

पदान्तेऽन्हः स्यादे ॥ अहरधीते । लुपीति किम् ? । हे दीर्घाहोऽत्र । अरीति किम् ? । अहो रूपम् ॥

रो रे लुग्दीर्घश्चादिदुतः ॥ १ । ३ । ४१ ॥

अनु ॥ पुना रमते । अग्नी रथेन । पटू राजा । अन्विति किम् ? । मनोरथः ॥

ढस्तड्ढे ॥ १ । ३ । ४२ ॥

अनु लुक्, दीर्घश्चादिदुतः ॥ मादि । लीढम् । गूढम् । तासिमिचे ढे इति किम् ? । मधुलिड्ढौकते ॥

तदः सेः स्वरे पादार्था ॥ १ । ३ । ४५ ॥

लुक् ॥ सैष ... रामः । सा चेत् पादपूरणीति किम ?।

स एष भरतो राजा ॥

**एतदश्च व्यञ्जनेऽनग्नञ्समासे ॥ १ । ३ । ४६ ॥**

तदः सेर्लुक् ॥ एष ददाति । स याति । अनग्नञ्समासे किम्? । एषकः कृती । सको याति । अनेषो याति । असो याति । संहितैक-पदे नित्या नित्या धातूपसर्गयोः । नित्या समासे वाक्ये तु सा विव-क्षामपेक्षते ॥ १ ॥

इति श्रीतपोगच्छाचार्यविजयदेवसूरिविजयसिंहसूरिपट्टपरम्परा-प्रतिष्ठितगीतार्थरत्नादिगुणोपेतवृद्धिचन्द्रापरनामवृद्धिविजयचरणकमल-मिलिन्दायमानान्तेवासिसविग्नशास्त्रीयतपोगच्छाचार्यभट्टारकश्रीविजय-नेमिसूरिविरचितायां लघुहेमप्रभायां स्यादिसन्धिः ॥

---

## ॥ अथ स्वरान्ताः पुँल्लिङ्गाः ॥

---

**अधातुविभक्तिवाक्यमर्थवन्नाम ॥ १ । १ । २७ ॥**

देवः ॥

**समानामर्थेनैकः शेषः ॥ ३ । १ । ११८ ॥**

सहोक्तौ गम्यायाम् ॥

**स्यादावसंख्येयः ॥ ३ । १ । ११९ ॥**

सर्वस्मिन् तुल्यरूपाणां सहोक्तावेकः शिष्यते ॥ देवौ २ ॥

**अत आः स्यादौ जस्भ्याम्ये ॥ १ । ४ । १ ॥**

देवाः ॥

**समानादमोतः ॥ १ । ४ । ४६ ॥**

लुक् ॥ देवम् ॥

**शसोऽता सश्च नः पुंसि ॥ १ । ४ । ४९ ॥**

पूर्वसमानस्य दीर्घस्तत्सन्नियोगे ॥ देवान् ॥

**टाङसोरिनस्यौ ॥ १ । ४ । ५ ॥**

अत ॥ देवेन । देवाभ्याम् ३ ॥

**भिस ऐस् ॥ १ । ४ । २ ॥**

अत स्यादे ॥ देवैः ॥ ऐसकरणादतिजरसैः ।

**ङेङस्योर्यातौ ॥ १ । ४ । ६ ॥**

अतः ॥ देवाय ॥

**एद्बहुस्भोसि ॥ १ । ४ । ४ ॥**

अतः स्यादौ ॥ देवेभ्य २॥

**विरामे वा ॥ १ । ३ । ५१ ॥**

अशिटो धुटः प्रथम. ॥ देवात् । देवाद् । देवस्य । देवयो. २ ॥

**ह्रस्वापश्च ॥ १ । ४ । ३२ ॥**

सौदन्ताच्चामो नाम् ॥

**दीर्घो नाम्यतिसृचतसृषः ॥ १ । ४ । ४७ ॥**

समानस्य ॥ देवानाम् । अष इतिप्रतिषेधाच्छकारेऽप्यवधानेऽपि दीर्घः । पञ्चानाम् । देवे ॥

स शिङ्ना

न्तरेऽपि ॥ २ । ३ । १५ ॥

कृतरसस्य वा ष ॥ देवेषु । पदमध्ये किं ? । दधिसेक् ॥

धृत्यन्तोऽसये ॥ १ । १ । २६ ॥

पद ना॥ परार्थाभिधायी समासादिर्वृत्ति । इति सेफ् शब्दे सस्य पदादित्वम्॥

अदेत स्यमोर्लुक् ॥ १ । ४ । ४४ ॥

आमन्त्र्यवृत्ते ॥ हेदेव । एव जिनादय । सर्व । सर्वार्थो विश्व । उभ, अस्य द्विवचनमेव । उभयट्, नास्य द्विवचनम् । अन्य । अन्यतर । अस्योपादानात् अन्यतमस्य न ग्रहणम् । इतर । डतर, डतम, अनयो स्वार्थिकयोर्ग्रहणमन्येषामग्रहणार्थं दार्थ च ॥ अन्यार्थस्त्वः । समुच्चयार्थस्त्वत् । अज्ञानात्त्वत । स्वक्न । अर्धार्थो नेम । समसिमौ सर्वार्थौ । पूर्वपरावरदक्षिणोत्तरापराधराणि व्यवस्थायाम् । स्वमज्ञातिधनाख्यायाम् । अन्तर बहिर्योगोपसव्यानयोरपुरि । त्यद् तद् यद् एतद् इदम् अदस् एक द्वि युस्मद् भवतु अस्मद् किम् इत्यसज्ञायां सर्वादि । सर्व । सर्वौ ? ॥

जस इ ॥ १ । ४ । ९ ॥

सर्वादेरदन्तस्य ॥ सर्वे ॥

रषृवर्णान्नो ण एकपदेऽनन्त्यस्यालचटतवर्गशसान्तरे ॥ २ । ३ । ६३ ॥

सर्वेण ॥ लादिवर्जनं किम् ? । विरलेन इत्यादि । अनन्त्यस्येति किम् ? । सर्वान् ॥

## सर्वादेः स्मैस्मातौ ॥ १ । ४ । ७ ॥

दन्तस्य ङेङस्योः ॥ सर्वस्मै । सर्वस्मात् ॥

## अवर्णस्याम साम् ॥ १ । ४ । १५ ॥

र्वादे ॥ सर्वेषाम् ॥

## ङे. स्मिन् ॥ १ । ४ । ८ ॥

सर्वादेरदन्तस्य ॥ सर्वस्मिन् । शेष देववत् । तत्सम्बन्धिविज्ञानात् , अतिसर्वा इत्यादि। एव विश्वादय । उभ–त्वत्–द्वि–युष्मद्–भवत्वस्मदो हेत्वर्थप्रयोगे सर्वविभक्त्याद्य प्रयोजन गणपाठे ॥

## नवभ्य पूर्वेभ्य इस्मात्स्मिन् वा ॥१।४।१६॥

अदन्तेभ्यो जसङसिङीनाम् ॥ पूर्वे । पूर्वाः । पूर्वस्मात् । पूर्वात् । पूर्वस्मिन् । पूर्वे । एव परादय ॥

## न सर्वादि ॥ १ । ४ । १२ ॥

द्वन्द्वे सर्वादि ॥ पूर्वापरात् । पूर्वापरे । कतरकतमानाम् । कतरकतमका ॥

## द्वन्द्वे वा ॥ १ । ४ । ११ ॥

अदन्तस्य सर्वादेर्जस इ ॥ पूर्वापरे । पूर्वापराः । शेष देववत् ॥

## तृतीयान्तात् पूर्वावर योगे ॥ १ । ४ । १३ ॥

सर्वादि न ॥ मासेन पूर्वाय । मासपूर्वाय । दिनेनावराय । दिनावराय । योगे किम् ? यास्यति चैत्रो मासेन । पूर्वस्मै दीयतां कम्बल ॥

## तीय ङित्कार्ये वा ॥ १ । ४ । १४ ॥

सर्वादि द्वितीयस्मै । द्वितीयायेत्यादि । शेष देववत् ॥

नेमार्धप्रथमचरमतयायाल्पकतिपयस्य वा ॥ १ । ४ । १० ॥

अदन्तस्य जस इः ॥ नेमे, नेमाः । शेष सर्ववत् । अर्धे, अर्धाः । प्रथमे, प्रथमाः । चरमे चरमाः । द्वितये द्वितयाः । द्वये द्वयाः । अल्पे अल्पाः । कतिपये कतिपयाः । शेष देववत् । व्यवस्थितविभाषा विज्ञानात् संज्ञायां न । अर्धा नाम केचित् । निर्जर ॥

जराया जरस्वा ॥ २ । १ । ३ ॥

स्वरादौ स्यादौ ॥ एकदेशविकृतस्यानन्यत्वात् । निर्जरसौ । इनादीन् बाधित्वा परत्वाज्जरस् । निर्जरसा । निर्जरसैरित्यादि । शेष पक्षे च देववत् ।

मासनिशासनस्य शसादौ लुग्वा ॥ २ । १ । १०० ॥

स्यादौ ॥ मास ॥

नाम सिदय्व्यञ्जने ॥ १ । १ । २१ ॥

पदम् ॥ माभ्याम् ॥ अयिति किम् ? माच्याति । सिद्ग्रहण नियमार्थम् । तेन प्रत्ययान्तरे न । भागवतम् । दन्तः ॥

दन्तपादनासिकाहृदयासृग्यूषोदकदोर्यकृच्छकृतो दत्पन्नस्हृदसन्यूषन्नुदन्दोषन्यकञ्शकन् वा ॥ २ । १ । १०१ ॥

शसादौ स्यादौ ॥ दतः । दन्तान् । पदः, पादान् इत्यादि । यूष ॥

अनोऽस्य ॥ २ । १ । १०८ ॥

ङीस्याद्यघुट्स्वरे लुक् ॥ यूष्ण ॥

नाम्नो नोऽनह्नः ॥ २ । १ । ९१ ॥

पदान्ते लुक्, स चासन् स्यादिविधौ ॥ यूषभ्याम्। यूषसु। असत्त्वाद् दीर्घत्वादि न। अनह्न किम्?। अहरेति। अहोरूपम् ॥

ईङौ वा ॥ २ । १ । १०९ ॥

अनोऽस्य लुक् ॥ यूष्णि। यूषणि। अह्नः ॥

सङ्ख्यासायवेरह्नस्याहन् ङौ वा ॥ १ । ४ । ५० ॥

अह्नि। अहनि। अह्ने। एवं सायाह्नः। व्यह्नः। इत्यदन्ता। विश्वपाः।

लुगातोऽनापः ॥ २ । १ । १०७ ॥

ङीस्याद्यघुट्स्वरे ॥ विश्वपः। इत्यादि। एवं हाहाः। अनाप इति किम्?। शालाः। इत्यादन्ताः। मुनि ॥

इदुतोऽस्त्रेरीदूत् ॥ १ । ४ । २१ ॥

औता ॥ मुनी। अस्त्रेरिति किम्?। अतिस्त्रियौ ॥

जस्येदोत् ॥ १ । ४ । २२ ॥

इदुतः ॥ मुनय ॥

टः पुंसि ना ॥ १ । ४ । २४ ॥

इदुतः ॥ मुनिना ॥

ङित्यदिति ॥ १ । ४ । २३ ॥

स्यादाविदुतोरेदोतौ। मुनये। अदितीति किम्?। बुद्ध्यै। स्या-दौ किम्?। शुची ॥

एदोद्भ्यां ङसिङसो रः ॥ १ । ४ । ३५ ॥

मुनेः २। वचनभे... ...ऽनिष्टयर्थः ॥

ङिडौं ॥ १ । ४ । २५ ॥

इदुतः ॥

ङित्यन्त्यस्वरादेः ॥ २ । १ । ११४ ॥

लुक् । व्यपदेशिवदेकस्मिन् । मुनौ । अदिदित्येव । बुद्ध्याम्

ह्रस्वस्य गुणः ॥ १ । ४ । ४१ ॥

आमन्त्र्यार्थवृत्तेः सिना सह । हे मुने । अतिस्त्रि ॥

स्त्रियाः ॥ २ । १ । ५४ ॥

इवर्णस्य स्वरादौ प्रत्यये इय् । अतिस्त्रियौ । अतिस्त्रियः ॥

वाऽम्शसि ॥ २ । १ । ५५ ॥

स्त्रिया इय् । अतिस्त्रियम् । अतिस्त्रिम् । अतिस्त्रियः । अतिस्त्रीन् । अतिस्त्रियै । अतिस्त्रये । स्त्रिया ङितामिति वा दै । अतिस्त्रियाः । अतिस्त्रेः । अतिस्त्रियोः । अतिस्त्रीणाम् । अतिस्त्रियाम् । अतिस्त्रौ । शेषं मुनिवत् ॥

ऋदुशनस्पुरुदंशोऽनेहसश्च सेर्डाः ॥ १ । ४ । ८४ ॥

सख्युरिति शेषस्य । सखा । प्रियसखा ॥

सख्युरितोऽशावैत् ॥ १ । ४ । ८३ ॥

शेषे घुटि । सखायौ । प्रियसखायौ । अशाविति किम् ? । अतिसखीनि कुलानि । इतः किम् ? । सख्यौ ॥

न नाङिदेत् ॥ १ । ४ । २७ ॥

केवलसखिपतेः । सख्या । सख्ये । केवलेति किम् ? । प्रियसखिना । प्रियसखये ॥

खितिखीतीय उर् ॥ १ । ४ । ३६ ॥

ङसिङसोः । सख्युः २ । य इति किम् ? । प्रियसखेः । खि-

वीत्यादि किम् ? । मुख्यः । अपत्य० ॥

केवलसखिपतेरौः ॥ १ । ४ । २६ ॥

इदुदन्तात् ङिः । सख्यौ । केवलेति किम् ? । प्रियसखौ । सखीमतिक्रान्तोऽतिसखिः । मुनिवत् । पतिः । पत्या ॥

डत्यतु सङ्ख्यावत् ॥ १ । १ । ३९ ॥

डतिष्णः सङ्ख्याया लुप् ॥ १ । ४ । ५४ ॥

जश्शसोः । कति ? । तत्सम्बन्धिनोरित्येव । प्रियकतयः । प्रियकतीन् ॥

लुप्यय्वृल्लेनत् ॥ ७ । ४ । ११२ ॥

परमत्ययस्य लुभूतपरनिमित्तक पूर्वकार्यं न । इति निषेधार्थकारः । लुपीति किम् ? । गोमान् । " नन्ता सङ्ख्या डतिर्युष्म–दस्मच्च स्युरलिङ्गकाः । " एव यतिततिशब्दौ ॥

त्रेस्त्रयः ॥ १ । ४ । ३४ ॥

आम । त्रयाणाम् । तत्सम्बन्धिविज्ञानात् प्रियत्रीणाम् ॥

आद्वेरः ॥ २ । १ । ४१ ॥

त्यदादेः स्वसम्बन्धिनि स्यादौ तसादौ च ॥ द्वौ २ ॥ द्वाभ्याम् ३ । द्वयोः २ । अतिद्विर्मुनिवत् । उडुलोम्नोऽपत्य पुमान् औडुलोमिः । एकत्वे द्वित्वे च मुनिवत् । बहुत्वप्रत्यये उडुलोमशब्दो देववत् । उडुलोमाः । रविकविप्रमुखा मुनिवत् । वातं प्रमिमीते वातप्रमीः । वातप्म्यौ । वातप्रम्यः । वातप्रमीम् । वातप्रमीन् । वातप्रमी । एवंययीपप्यादयः । क्विबन्ते तु अमि शसि ङौ च विशेषः । क्विवृत्तेरिति यत्वम् । वातप्रम्यम् । वातप्रम्यः । वातप्रम्यि ॥

दि [illegible] नास्तेः ॥ १ । ४ । ४६ ॥

न्तः ॥ [illegible] किम् ? । निष्कौशाम्बिः ।

## स्त्रीदूत. ॥ १ । ४ । २९ ॥

स्यादेर्ङितां दैदास्दास्दाम॰ ॥ बहुश्रेयस्यै । बहुश्रेयस्याः । बहुश्रेयस्याम् ॥

## नित्यदिद्विस्वराम्बार्थस्य ह्रस्व ॥ १ । ४ । ४३ ॥

आमन्त्र्यार्थवृत्तेर्नित्यदितो द्विस्वराम्बार्थस्य चान्तस्य सिना ह्रस्व । हे बहुश्रेयसि । नित्यदिदिति किम् ? । हे ग्रामणी॰ । हे सुधीः । कुमारीमिच्छन् कुमारीवाचरन् वा ब्राह्मणः कुमारी ॥

## योऽनेकस्वरस्य ॥ २ । १ । ५६ ॥

धातोरिवर्णस्य स्वरादौ प्रत्यये । कुमार्यौ । कुमार्यम् । कुमार्यः कुमारीणाम् । खरकुटीव खरकुटी तस्मै खरकुट्यै ब्राह्मणाय । अतिलक्ष्मी. । शेष बहुश्रेयसीवत् । नयतीति नी. ॥

## धातोरिवर्णोवर्णस्येयुव् स्वरे प्रत्यये ॥ २ । १ । ५० ।

नियौ । निय ॥

## निय आम् ॥ १ । ४ । ५१ ।

ङे ॥ नियाम् । सुष्ठु श्रीर्यस्य स सुश्री ।

## सयोगात् ॥ २ । १ । ५२ ॥

धातोरिवर्णोवर्णयो स्वरादौ प्रत्यये इयुवौ । सुश्रियौ । सुश्रियः । धातुसम्बन्धिन सयोगादिति किम् ? । उन्न्यौ ॥

## वेयुवोऽस्त्रिया ॥ १ । ४ । ३० ॥

यौ स्त्रीदूतौ तदन्तात् स्यादेर्ङितां दैदास्दास्दाम॰ ॥ सुश्रियै । सुश्रिये । सुश्रियाः । सुश्रियः ॥

## आमो नाम्वा ॥ १ । ४ । ३१ ॥

इयुवो यौ स्त्रीदूतौ तदन्तादस्त्रियाः ॥ सुश्रियाम् । सुधीणाम् । सुश्रियाम् । सुश्रियि । प्रकर्षेण ध्यायतीति प्रधीः ॥

क्विब्वृत्तेरसुधियस्तौ ॥ २ । १ । ५८ ॥

धातोरिवर्णोवर्णयोः स्वरादौ स्यादौ य्वौ ॥ प्रध्यौ । प्रध्यः । प्रध्याम् । असुधिय इति किम् ? । सुष्ठु ध्यायतीति सुधीः । सुधियौ । क्विबन्तेनैव वृत्तेरिति किम् ? । शुद्धा धीर्ययोस्तौ शुद्धधियौ । गतिकारकङस्युक्तानां प्राक्प्रत्ययोत्पत्तेः कृदन्तेन समासः । एवं परमधियौ । दुर्धियौ । यवक्रियौ ।। सह खेन वर्तते सखः तमिच्छति सखायमिच्छतीति वा सखीयति सखीयतीति सखीः । सख्यौ । सुतमिच्छतीति सुती । सख्युः २ । सुत्युः २ । लूनं क्षाम प्रस्तीममिच्छतीति लूनीः क्षामीः प्रस्तीमीः । एषां ङसिङसोर्यत्वे कृते ॥

क्तादेशोऽपि ॥ २ । १ । ६१ ।

पर कार्ये स्यादिविधौ च कर्त्तव्ये असन् ज्ञेयः ॥ इति नत्वमत्वयोरसत्वादुर् । लून्युः २ । क्षाम्युः २ । शुष्कीपक्वीशब्दयोस्तु कत्वनत्वयोरसत्वात् तीत्वेऽपि यत्वाभावान्न उर् । शुष्कियः २ । पक्वियः २ । उन्नीः । उन्न्यौ । उन्न्याम् । ग्रामण्याम् । सेनान्याम् । परमं नयतीति परमनीः । परमन्यौ । कर्मधारये तु परमनियौ । इतीदन्ताः ॥ साधुर्मुनिवत् । इत्युदन्ताः । हूहूः । हूह्वौ । हूहूः । हूहूम् । हूह्वौ । हूहून् । अतिचमूः । अतिचम्वौ । शेषं वधूश्रेयसीवत् । सुलूः । सुल्वौ । खलपूः । खलप्वौ । उल्लूरग्नीवत् । भूः सुधीवत् । दृन्भरतीति दृन्भूः ॥

दृन्पुनर्वर्षाकारैर्भुवः ॥ २ । १ । ५९ ॥

क्विब्वृत्तेरुवर्णस्य स्वरादौ स्यादौ वः ॥ दृन्भ्वौ । पुनर्भ्वौ । वर्षाभ्वौ । कारभ्वौ । काराभ्वाविति केचित् ।

अनेकस्वरस्य धातोरिवर्णस्य स्वरादौ वः ॥ वसुमिच्छतीति वसू । वस्वौ । वस्वः । वस्वि । स्यादौ किम् ? । लुलुवतुः । इत्यु दन्ताः । पिता ॥

अड्डौं च ॥ १ । ४ । ३९ ॥

घुटि ऋतः ॥ पितरौ ॥

ऋतो डुर् ॥ १ । ४ । ३७ ॥

ङसिङसोः ॥ पितुः ? । पितरि । कर्त्ता ॥

तृस्वसृनप्तृनेष्टृत्वष्टृक्षत्तृहोतृपोतृप्रशास्त्रो घुट्यार् ॥ १ । ४ । ३८ ॥

ऋत स्यान्यसम्बन्धिनि । कर्त्तारौ । अतिस्वसारौ । ना । नरौ । नरः । नृ ।

नुर्वा ॥ १ । ४ । ४८ ॥

नामि दीर्घः ॥ नृणाम् । नृणाम ॥

क्रुशस्तुनस्तृच् पुंसि ॥ १ । ४ । ९१ ॥

शेषे घुटि । क्रोष्टा । प्रियक्रोष्टा । क्रोष्टारौ । घुटि किम् ? । क्रोष्टून् । शेषे किम् ? । हे क्रोष्टो ॥

टादौ स्वरे वा ॥ १ । ४ । ९२ ॥

क्रुशस्तुनस्तृच् पुंसि ॥ क्रोष्ट्रा । क्रोष्टुना । आमि नित्यत्वात् पूर्व नामादेशे, क्रोष्टूनाम् । इति ऋदन्ताः ॥ ऋगतधातूनामनुकरणे, की । गी । ती । किरावित्यादि । इरभावे कृ. । क्रौ । क्रः । कृम् । कृन् । इत्यादि ॥ इति ऋदन्ता. ॥ ऋत्कार्यं लृकारेऽपि । विदा ॥ ऋफिडादित्वाल्लत्वे । विद्लौ । ङसिङसोर्विदुल् ॥ इति लृदन्ताः ॥ वल्लृकारैकदेशस्यानुकरणे वल्ल् । क्लौ । क्ल । इत्यादि । इति ल्टदन्ता । अतिहे. । हे अतिहे ॥ इत्येदन्ता ॥

## आ रायो व्यञ्जने ॥ २ । १ । ५ ॥

नदतत्सम्बन्धिनि स्यादौ ॥ राः । रायौ । राभ्याम् । रासु । एवं सुराः । अतिरा । इत्यैदन्ताः ॥

## ओत औः ॥ १ । ४ । ७४ ॥

-रिहिते घुटि । गौः । गावौ । गावः । विहितविशेषणादोकार-विधानसामर्थ्याच्च चित्रगवः। द्यौः। द्यावौ। द्याव । मियद्यौ । लु-नातेर्विचि गुणे । लौः । ओतः किम् ? । चित्रगुः ॥

## आ अम्शसोऽता ॥ १ । ४ । ७५ ॥

ओतः ॥ गाम् । सुगाम् । गाः । द्याम् । स्यादावित्येव । अचि-नवम् । इत्योदन्ताः । सुनौः । सुनावौ । इत्यादि । इत्यौदन्ताः ॥

इति श्रीतपोगच्छाचार्यविजयदेवसूरिविजयसिंहसूरिपट्टपरम्परा-प्रतिष्ठितगीतार्थत्वादिगुणोपेतवृद्धिचन्द्रापरनामवृद्धिविजयचरणकम-लमिलिन्दायमानान्तेवासिसविग्नशाखीयतपोगच्छाचार्यश्रीविजयने-मिसूरिविरचितायां लघुहेमप्रभायां स्वरान्ताः पुंलिङ्गाः ॥

---

# ॥ अथ स्वरान्ताः स्त्रीलिङ्गाः ॥

पद्मा ॥

## औता ॥ १ । ४ । २० ॥

आबन्तस्य स्वसम्बन्धिनौकारः ॥ पद्मे ॥

## टौस्येत् ॥ १ । ४ । १९ ॥

आबन्तस्य स्वसम्बन्धिनि ॥ पद्मया ॥

## आपो ङितां यैयास्यास्याम् ॥ १ । ४ । १७ ॥

पद्मायै । पद्मायाः २ । पद्मयोः २ । पद्मायाम् ॥

## एदापः ॥ १ । ४ । ४२ ॥

वर्णोवर्णस्येति नित्यमिय्। स्त्रियम्। स्त्रियः। अतिस्त्रियम् २। अतिस्त्रियः २। अतिस्त्रिया। शेषं पुंवत्। श्री। श्रियौ। श्रियै। श्रिये। अतिश्रियै। अतिश्रिये। स्त्रियै नराय वा। एवं धीह्री-प्रभृतयः। प्रवृत्तिनिमित्तैक्ये सति लिङ्गान्तरविशिष्टार्थानभिधायकत्व नित्यस्त्रीत्वमितिमते। प्रकृष्टा धीर्यस्य यस्या वेति विग्रहे प्रकृष्टा धीरिति विग्रहे वा लक्ष्मीवत्। अमि शसि च प्रध्यम्, प्रध्यः। पदान्तरं विना स्त्रिया वर्त्तमानत्वं नित्यस्त्रीत्वमितिमते तु प्रकृष्टं ध्यायतीति विग्रहेऽपि लक्ष्मीवत्। सुष्ठु धीर्यस्या यस्य वा शोभना धीः सुधीरिति वा विग्रहे सुधीरुभयमतेऽपि श्रीवत्। सुष्ठु ध्यायतीति विग्रहे परमते श्रीवत्। पूर्वमते तु नीवत्। ग्रामणीः पुंवत्। ग्रामनयनं पुंधर्म उत्सर्गतः॥

## स्त्रियाम्॥ १। ४। ९३॥

क्रुशस्तुनस्तृच्॥ निर्निमित्तत्वात् पञ्चक्रोष्टृ इत्यत्र न तृज्निवृत्ति'॥

## स्त्रिया नृतोऽस्वस्रादेर्ङी.॥ २। ४। १॥

क्रोष्ट्री। देवीवत्। इतीदन्ताः॥ रज्जुतनुधेन्वादयो मतिवत्॥ इत्यु-दन्ता'। भ्रूः श्रीवत्॥

## भ्रूश्नो॥ २। १। ५३।

उवर्णस्य संयोगात्परस्य स्वरादौ प्रत्यये उव्॥ भ्रुवौ। भ्रुवः। हे भ्रूः। हे सुभ्रु इत्यादौ स्त्रीपर्यायत्वादृदि कृते ह्रस्वः। भ्रुवा। भ्रुव'। भ्रूणाम्। भ्रुवाम्। स्वरूप- पुंवत्। पुनर्भूः। हेपुनर्भु। पुनर्भ्वम्॥

## कवर्गकस्वरवति॥ २। ३। ७६॥

उत्तरपदे पूर्वपदस्थाद्रषृवर्णात् परस्य उत्तरपदान्तस्थनागमस्य स्यादेश्च नो ण', न चेत्पकसम्बन्धी॥ पुनर्भूणाम्। वर्षाभूः। हे वर्षा-

मातुर्मानि पुत्रेऽर्हे सिनाम्न्यपे ॥ २। ४ । ४० ॥ इ गार्गीमाता । अह इति नित्य १ । अरे गार्गीमातर ॥ ( पंक्ति ६ ठीमा ' शसि मातृः ' पढो )

भ्रु। "भेस्यां पुनर्नवायां स्त्री वर्षाभूर्दर्दुरे पुमान्।" भेकजातौ नित्य स्त्रीत्वाभावात्। हेवर्षाभूः । वर्षाभ्वौ । स्वयभू पुंवत्। वधूजम्बन्यौ देवीवत् । स्वसा ।

" स्वसा तिस्रश्चतस्रश्च ननान्दा दुहिता तथा ।
याता मातेति सप्तैते स्वसादय उदाहृताः ॥ १ ॥ "

माता पितृवत्। शसि मातृः । रा पुंवत् । द्यौर्गोवत्। नौर्ग्लौवत् ॥

इति श्रीतपोगच्छाचार्यविजयदेवसूरिविजयसिंहसूरिपट्टपरम्परा-प्रतिष्ठितगीतार्थत्वादिगुणोपेतवृद्धिचन्द्रापरनामवृद्धिविजयचरणकमल-भिलिन्दायमानान्तेवासिसविग्नशाखीयतपोगच्छाचार्यभट्टारकश्रीविजयनेमिसूरिविरचितायां लघुहैमप्रभायां स्वरान्ताः स्त्रीलिङ्गाः ॥

---

## ॥ अथ स्वरान्ता नपुंसकलिङ्गाः ॥

---

अतः स्यमोऽम् ॥ १ । ४ । ५७ ॥

नपुंसकस्य ॥ कुण्डम् २ ॥

औरीः ॥ १ । ४ । ५६ ॥

नपुंसकस्य ॥ कुले २ ॥

नपुंसकस्य शिः ॥ १ । ४ । ५५ ॥

जस्शसोः ॥

स्वराच्छो ॥ १ । ४ । ६५ ॥

नपुंसकान्नोऽन्त ॥

नि दीर्घः ॥ १ । ४ । ८५ ॥

शेषघुट्परे स्वरस्य ॥ कुलानि २ । शेष पुंवत् ॥

पञ्चतोऽन्यादेरनेकतरस्य दः ॥ १ । ४ । ५८ ॥

नपुंसकस्य स्यमोः॥ अन्यत्। अन्यद्। अन्यतरत् २। इतरत् २। कतरत् २। कतमत् २। अनेकतरस्येति किम् ?। एकतरम्। सम्बन्धिविज्ञानात् प्रियान्यम्। सर्वादेरित्येव। अन्य नाम किञ्चित्। अतिजरम्। अतिजरसम्॥

## जरसो वा ॥ १ । ४ । ६० ॥

नपुंसकस्य स्यमोर्लुप्॥ अतिजरः २। अतिजरसी। अतिजरे। शौ परत्वाज्जरस्॥

## धुटां प्राक् ॥ १ । ४ । ६६ ॥

स्वरात् परा या धुड्जातिस्तदन्तस्य नपुंसकस्य शौ धुड्भ्य एव प्राग् नोऽन्तः॥

## न्स्महतो ॥ १ । ४ । ८६ ॥

स्वरस्य शेषे घुटि दीर्घः॥ अतिजरांसि। अतिजराणि। हृदयानि। हृन्दि। उदकानि। उदानि। आसानि। आसनानि॥

## क्लीबे ॥ २ । ४ । ९७ ॥

स्वरान्तस्य ह्रस्वः॥ विश्वपम्॥

## अनतो लुप् ॥ १ । ४ । ५९ ॥

नपुंसकस्य स्यमोः॥ लुप्करणं स्थानिवद्भावनिषेधार्थम्। तेन यत् तदित्यादि। प्रियत्रि॥

## नामिनो लुग् वा ॥ १ । ४ । ६१ ॥

नपुंसकस्य स्यमोः॥ प्रियतिसृ॥

## अनाम्स्वरे नोऽन्त ॥ १ । ४ । ६४ ॥

नाम्यन्तस्य नपुंसकस्य स्यादौ॥ प्रियतिसृणी। प्रियतिसृणि॥

## ... स्वरे ॥ १ । ४ । ६२ ॥

नाम्यन्तो नपुंसकः ॥ प्रियतिसा । प्रियतिसृणा । प्रियतिसृणाम् । प्रन्दा द्विविधा । दध्यादिवत् केचित्स्वतो लिङ्गभाजः, अन्ये गुणक्रियादिप्रवृत्तिनिमित्ताः पटुचिकीर्षादयो विशेष्यानुरूपलिङ्गभाजः । वारि । हे वार । हे वारि । ग्रामणि । ग्रामण्या । ग्रामणिना । ग्रामण्याम् । ग्रामणीनाम् । एवं सुधिप्रभृतयः । प्ररि । प्ररा । प्रराभ्याम् । प्ररीणाम् ॥

## दध्यस्थिसक्थ्यक्ष्णोऽन्तस्यान् ॥ १ । ४ । ६३ ॥

नाम्यन्तस्य नपुंसकस्य टादौ स्वरे ॥ दध्ना । प्रियदध्ना । अस्थि । सक्थि । अक्षि । मधु । जतु । सानु । पटु । पटवे । पटुने । प्रियक्रोष्ट्रे । प्रियक्रोष्ट्रा । प्रियक्रोष्टुना । अतिगु । अतिगुना । एवं मधुप्रभृतयः । कर्तृ । हे कर्तः । हे कर्तृ । कर्त्रा । कर्तृणा ॥

इति श्रीतपोगच्छाचार्यविजयदेवसूरिविजयसिंहसूरिपट्टपरम्पराप्रतिष्ठितगीतार्थत्वादिगुणोपेतवृद्धिचन्द्रापरनामवृद्धिविजयचरणकमलमिलिन्दायमानान्तेवासिसविग्नशारीयतपोगच्छाचार्यभट्टारकश्रीविजयनेमिसूरिविरचितायां लघुहैमप्रभायां स्वरान्ता नपुंसकलिङ्गाः ॥

## ॥ अथ व्यञ्जनान्ताः पुंल्लिङ्गाः ॥

## चजः कगम् ॥ २ । १ । ८६ ॥

धुटि प्रत्यये पदान्ते च तयोरसत्परे स्यादिविधौ च पूर्वस्मिन् ॥ सुवाक् । सुवाग् । सुवाचौ । सुवाक्षु ॥

## अञ्चोऽनर्चायाम् ॥ ४ । २ । ४६ ॥

अञ्चोपान्त्यनस्य लुक् किति ङिति च ॥ अनर्चायामिति किम् ? । अञ्चितोऽग्निः ॥

घुटि ॥ १ । ४ । ६८ ॥

निमित्तविशेषोपादानं विनाऽऽपादपरिसमाप्तेर्यत् कार्यं वक्ष्यते तद्घुटि वेदितव्यम् ॥

अचः ॥ १ । ४ । ६९ ॥

युदन्तस्याञ्चतेर्धातोस्तदन्तस्मिन्धिनि घुटि धुट प्राग् नोऽन्तः॥

युजञ्चक्रुञ्चो नो ङः ॥ २ । १ । ७१ ॥

पदान्ते ॥ प्राङ् । प्राञ्चौ ॥

अच्च प्राग्दीर्घश्च ॥ २ । १ । १०४ ॥

णिक्यघुड्वर्जिते यकारादौ स्वरादौ च प्रत्यये ॥ प्राचः । प्राग्भ्याम् । प्राक्षु । हे प्राङ् । एवं प्रत्यङ् । प्रतीचः । अन्वाचयशिष्टत्वाद् दीर्घत्वस्य तदभावेऽपि चादेशो भवति । दृषद्भ्यः ॥

उदच उदीच् ॥ २ । १ । १०३ ॥

णिक्यघुड्वर्जे यकारादौ स्वरादौ च । उदीचः । उदग्भ्याम् ॥

सहसम सध्रिसमि ॥ ३ । २ । १२३ ॥

क्विबन्तेऽञ्चतौ । सहाञ्चतीति सध्र्यङ् । समञ्चतीति सम्यङ् । समीचः ॥

तिरसस्तिर्यति ॥ ३ । २ । १२४ ॥

क्विबन्तेऽञ्चतौ । तिर्यङ् । तिर्यञ्चौ । तिरश्चः । तिर्यग्भ्याम् ॥

सर्वादिविष्वग्देवाड्डद्रि क्व्यञ्चौ ॥ ३ । २ । १२२ ॥

अन्तः॥ अदद्र्यङ् ॥

वाऽद्रौ ॥ २ । १ । ४६ ॥

प्रतेऽदसो दस्य मः ॥

## मादुवर्णोऽनु ॥ २ । १ । ४७ ॥

अदसो वर्णमात्रस्य आसन्नः ॥ द्यावत्र दकारो नत्र भविष्य धातूरूप्यम् । अदमुयङ् । अमुयङ् । अमुमुयङ् । अदमुपञ्चौ । अदमुञ्च । अदमुयग्भ्याम् । विष्वद्यङ् । देवद्र्यङ् । अर्वाञ्चां तु नं ऽन्त्यो न । ससादौ, मात्रः । माद्भ्याम् । माद्सु । माद्सु । एव त्यश्चादयः । क्रुञ्चे क्विपि क्रुञ्च इति सौत्रनिर्देशान्नलोपाभाव क्रुङ् । क्रुञ्चौ । क्रुञ्च ॥

## सयोगस्यादौ स्कोर्लुक् ॥ २ । १ । ८८ ॥

धुटि प्रत्यये पदान्ते च ॥

## यजसृजमृजराजभ्राजभ्रस्जव्रश्चपरिव्राजः श षः ॥ २ । १ । ८७ ॥

एषां चजोर्धातोः शस्य च धुटि प्रत्यये पदान्ते च षः । मूलं वृश्चति मूलवृट् २ । मूलवृश्चौ । मूलवृड्भ्याम् । मूलवृट्सु । देवेट् २ । चपयट् २ । तीर्थसृट् २ । मृट् २ । सम्राट् २ । भ्राट् २ । भृट् २ । भृज्जौ । परिव्राट् २ ॥

## युजोऽसमासे ॥ १ । ४ । ७१ ॥

युजन्तस्य धुटि परे धुट प्राग् नोऽन्तः ॥ युनक्तीति युङ् । युञ्जौ । युञ्ज । असमासे किम् ? । अश्वयुक् । ऋदिन्निर्देश किम् ? । युजिच् समाधावित्यस्य मा भूत् । युज्यते इति युक् । युजौ । युज । विभ्राङ् । विभ्राड्भ्याम् ॥

## ऋत्विज्दिशदृशस्पृशस्रज्दधृषुष्णिहो गः ॥ २ । १ । ६९ ॥

पदान्ते ॥ ऋत्विग् २ । ऋत्विजौ ॥

वसुराटोः ॥ ३ । २ । ८१ ॥

उत्तरपदयोर्विश्वस्य दीर्घः ॥ विश्वाराट् । विश्वराजौ ॥

रात्सः ॥ २ । १ । ९० ॥

पदस्य संयोगान्तस्य रात्सस्यैव लुक् ॥ ऊर्क् । ऊर्ग् । ऊर्जौ । मंख्व् । मल्वौ ॥

ऋदुदितः ॥ १ । ४ । ७० ॥

धुडन्तस्य घुटि धुटः प्राक् स्वरात्परो नोऽन्तः ॥ महान् । महान्तौ । हे महन् । महतः ॥

अभ्वादेरत्वसः सौ ॥ १ । ४ । ९० ॥

शेषे दीर्घः ॥ भवान् । भवन्तौ । हे भवन् । एवं गोमान् । अभ्वादेः किम् ? । पिण्डग्रः । गोमन्तमिच्छति क्यनि क्विप् गोमान् । शतृप्रत्ययान्तानां दीर्घाभावो विशेषः । पचन् । भवन् । महन् ॥

अन्तो नो लुक् ॥ ४ । २ । ९४ ॥

डुव्युक्तजक्षपञ्चतः परस्य शितोऽवितः ॥ ददत् । दधत् । जक्षत् । जाग्रत् । दरिद्रत् । शासत् । चकासत् । दधिमत् । दधिमद् । दधिमथौ । इत्यादि । सुपाद् २ । सुपादौ ॥

यस्वरे पादः पदणिक्यघुटि ॥ २ । १ । १०२ ॥

प्रत्यये ॥ सुपदः ॥

लुगस्यादेत्यपदे ॥ २ । १ । ११३ ॥

अपदे इति किम् ? । दण्डाग्रम् ॥

तः सौ सः ॥ २ । १ । ४२ ॥

त्यदादीनां स्वसम्बन्धिनि ॥ स्यः । त्यौ । त्ये । शेषं सर्ववत् । नियत्यत् पुमान् । सः । तौ । ते । यः । यौ । ये । एषः । एतौ । एते ॥

## त्यदामेनदेतदो द्वितीयाटौस्यवृत्त्यन्ते ॥ २ । १ । ३३ ॥

अन्वादेशे ॥ कस्यचिद्वस्तुनः किञ्चित्क्रियादिकं विधातुं कथितस्य तेनान्येन वा शब्देन पुनरन्यद्विधातुं कथनमन्वादेशः । उद्दिष्टमेतद्रूप्यनमथो एनदनुजानीत । एतकं साधुमावश्यकमध्यापयाथो एनमेव सूत्राणि । अत्र साकोऽप्यादेशः । एतेन रात्रिरधीताऽथो एनेनाहरप्यधीतम् । एतयोः शीलं शोभनमथो एनयोर्महती कीर्त्तिः । सर्वाणि शास्त्राणि जानन्तावेतौ अथो एनयोस्त्रिष्टनोर्नान्यः पूजार्हः । अवृत्त्यन्त इति किम् ? । अथो परमैनं पश्य । अन्तग्रहणं किम् ? । एनच्छ्रितकः । द्वितीयाटौसीति किम् ? । एते मेधाविनो विनीता अथो एते शास्त्रस्य पात्रम् । अन्वादेश इत्येव । जिनदत्तमध्यापय एतं च गुरुत्तम ॥

## गडदबादेश्चतुर्थान्तस्यैकस्वरस्यादेश्चतुर्थः स्ध्वोश्च प्रत्यये ॥ २ । १ । ७७ ॥

धान्वनयरस्य पदान्ते ॥ ध्रुत् । ध्रुद् । ध्रुधौ । ध्रुध । ध्रुद्भ्याम् । राजा । राजानौ ॥

## नामन्त्र्ये ॥ २ । १ । ९२ ॥

नाम्नो नस्य लुक् पदान्ते ॥ हे राजन् । राज्ञः । राजभ्याम् । राज्ञि । राजनि । यज्वा ॥

## न वमन्तसंयोगात् ॥ २ । १ । १११ ॥

परस्यानोऽकारस्य लुक् ॥ यज्वनः । आत्मा । आत्मनः । प्रतिदिवा ॥

## भ्वादेर्नामिनो दीर्घो र्वोर्व्यञ्जने ॥ २ । १ । ६३ ॥

प्रतिदीव्नः ॥ र्वोर्भ्वादिसम्बन्धिविशेषणं किम् ? । दिव्यति । नामिनो भ्वादिसम्बन्धिविशेषणं किम् ? । दधिव्याः । प्रत्यासत्त्या नस्यैवेति विशेषणाद् ग्रामणिव्या ॥

इन्हन्पूषार्यम्ण शिस्योः ॥ १ । ४ । ८७ ॥

इन्नन्तस्य हनादीनां च स्वरस्य शौ शेषे सावेव च दीर्घः । दण्डी । दण्डिनौ । तपस्वी । वाग्मी । वृत्रहा । वृत्रहणौ । हे वृत्रहन् ॥

हनो ह्नो घ्नः ॥ २ । १ । ११२ ॥

हनो घि ॥ २ । ३ । ९४ ॥

हन्तेर्नो घि निमित्तकार्यिणोरन्तरे सति णो न । वृत्रघ्नः । वृत्रहभ्याम् । वृत्रघ्नि । वृत्रहणि । पूषा । पूषणौ । अर्यमा । अर्यमणौ ॥

श्वन्युवन्मघोनो ङीस्याद्यघुट्स्वरे व उः ॥ २ । १ । १०६ ॥

सस्वर० । श्वा । श्वानौ । शुनः । युवा । यूनः । मघवा । मघोनः । अर्वा । अर्वाणौ ॥

पथिन्मथिनृभुक्ष सौ ॥ १ । ४ । ७६ ॥

एषां नान्तानामन्तस्य सौ आ ॥

ए ॥ १ । ४ । ७७ ॥

पथ्यादीना नान्तानामिकारस्य घुटि परे आः ॥

थो न्थ् ॥ १ । ४ । ७८ ॥

पथिमथोर्नान्तयोस्थस्य घुटि परे न्थ् स्यात् । पन्थाः । हे पन्थाः । पन्थानौ ॥

इन् ङीस्वरे लुक् ॥ १ । ४ । ७९ ॥

पथ्यादीनामघुटि च स्यादौ इन् लुक् । पथः । पथा । मन्थाः । मन्थानौ । मथः । मथा । ऋभुक्षाणौ । ऋभुक्षः । पथिभ्याम् । पथिभिः ॥

सङ्ख्यानां र्ष्णाम् ॥ १ । ४ । ३३ ॥

आमो नाम्। पञ्चनाम्। पञ्चसु। एवं सप्तादय.। प्रियपञ्चाद्यं राजवत्। प्रियपञ्च्न ॥

## वाष्टन आ स्यादौ ॥ १ । ४ । ५२ ॥

तन्तत्सम्बन्धिनि ॥

## अष्ट और्जश्शसो ॥ १ । ४ । ५३ ॥

स्वसम्बन्धिनो ॥ अष्ट इति कृताऽऽत्वस्याष्टनो निर्देश ॥ अष्टौ २ । अष्ट २ । अष्टाभि. । अष्टभि । अष्टभ्यः। अष्टाभ्य २ । अष्टानाम् । अष्टसु । अष्टासु । परमाष्टौ । परमाष्ट । प्रियाष्टा । प्रियाष्ट । प्रियाष्टौ । प्रियाष्टनौ । इत्यादि ॥

## अप ॥ १ । ४ । ८८ ॥

स्वरस्य शेषे घुटि दीर्घ ॥ स्वाप् । स्वापौ । इ स्वप् ॥

## अपोऽद् भे ॥ २ । १ । ४ ।

स्यादौ ॥ स्वद्भ्याम् । तुण्डिभमाचष्टे तुण्डिप् २ । तुण्डिभौ एवं गर्धप् । गर्दभौ । गर्भ्भ्याम् ॥

## अयमियं पुंस्त्रियो सौ ॥ २ । १ । ३८ ॥

त्यदामिदम. ॥ अयम् । परमायम् । साकोऽप्येवम् । त्यदामिति किम ? । अतीदम् ना स्त्री वा ॥

## दो मः स्यादौ ॥ २ । १ । ३९ ॥

त्यदामिदम ॥ इमौ २ । इमे । इमम् । स्मकम् । त्यदामित्येव । प्रियेदमौ ।

## इदम ॥ २ । १ । ३४ ॥

त्यदादिदमो द्वितीयाटौसि अन्वादेशे एनद् स्याद्वृत्यन्ते ॥ एनम् । एनौ । एनान् । एनेन । एनयो २ ॥

## अव्यञ्जने ॥ २ । १ । ३५ ॥

त्यदादेरिदमः स्यादावन्वादेशोऽस्त्यन्ते। आभ्याम्। एषु। अनक् इति वचनात् साकोऽपि विधिः ॥

टौस्यन. ॥ २ । १ । ३७ ॥

त्यदामनक इदम' ॥ अनेन । अनक इति किम ? । इमकेन ॥

अनक् ॥ २ । १ । ३६ ॥

त्यदादेर्व्यञ्जनादौ स्यादौ परे अगवर्जं इदमत् । आभ्याम् ॥

इदमदसोऽक्येव ॥ १ । ४ । ३ ॥

आत्परस्य भिस ऐस् । इमकैः । नियम किम् ? । एभिः । पञ्चभिः । अस्मै । एभ्य । अस्मात् । अस्य। अनयो । एषाम् । अस्मिन । एषु ॥

किम' कस्तसादौ च ॥ २ । १ । ४० ॥

त्यदां स्यादौ ॥ साकोऽपि । कः । कौ । के । शेषं सर्ववत्। त्यदामित्येव । प्रियकिम् ? ॥

मो नो म्वोश्च ॥ २ । १ । ६७ ॥

म्वादे' पदान्ते, म चासन् परे ॥ प्रशाम्यतीति प्रशान्। प्रशामौ । प्रशान्भ्याम् । एव प्रतान् । प्रतान्। परिक्रान् ॥

वा शेषे ॥ १ । ४ । ८२ ॥

घुटि परेऽनडुच्चतुरोरुतः ॥ चत्वारः। प्रियचत्वा.। चतुर' । चतुर्णाम् ॥

अरो सुपि र ॥ १ । ३ । ५७ ॥

एव रस्य । चतुर्षु ॥

उतोऽनडुच्चतुरो व ॥ १ । ४ । ८१ ॥

सम्बोधने सौ ॥ हे प्रियचत्व' ॥

दिव औः सौ ॥ २ । १ । ११७ ॥

सुयौ । सुदिवौ । हे सुद्यौः ॥

उ पदान्तेऽनूत् ॥ २ । १ । ११८ ॥

दिवः ॥ सुद्युभ्याम् । अनूत् किम् ? । द्युभवति । शब्दमाट् २ । शब्दमाशौ । एवं विश् । नाटक् । नाट्शौ । एवं सुदिशमदृशृष्ठ स्पृशादयः ॥

नशो वा ॥ २ । १ । ७० ॥

पदान्ते ग ॥ जीवनक् २ । जीवनट् २ । जीवनशौ ॥

सजुषः ॥ २ । १ । ७३ ॥

र पदान्ते ॥

पदान्ते ॥ २ । १ । ६४ ॥

भ्वादेर्नामिनो दीर्घः ॥ सह जुषते इति सजूः । सजुषौ ॥

णषमसत्परे स्यादिविधौ च ॥ २ । १ । ६० ॥

इत सूत्रादारभ्य यत्पर कार्यं विधास्यते तस्मिन् स्याद्यधिकारविहिते च पूर्वस्मिन्नपि कर्तव्ये णत्व षत्व वा, असिद्ध द्रष्टव्यम् ॥ परसूत्रनिर्दिष्टयोश्च णषयो परे ते णोऽसन् । णषशास्त्रं वा ॥ इति षत्वस्यासिद्धत्वात् पिपठीः । पिपठिषौ । पिपठी षु । पिपठीष्षु । दधृक् २ । दधृषौ । रत्नमुट् २ । रत्नमुषौ । एवं प्रियषट् २ । षट् २ । षड्भिः । षण्णाम् । चिकीर्षतीति चिकी । चिकीर्षौ । चिकीर्षु । विवक्षतीति विवट् २ । तट् २ । तक्षौ । व्यन्तात् क्विपि तु । तक् २ एवं गोरट् । गोरक् । पिपक् । पिपट् । सुपी । सुपिसौ । सुपी मुतसौ । विद्वान् । विद्वांसौ । हे विद्वन् ॥

क्वसुष्मतौ च ॥ २ । १ । १०५ ॥

अणिस्यधुट् यस्वरे प्रत्यये ॥ विदुषः ॥

स्रसुध्वस्नकस्सनडुहो दः ॥ २ । १ । ६८ ॥

पदान्ते स चासन् परे स्यादिविधौ च । विद्वद्भ्याम् । क्वसिति सकारपाठः किम् ? । विद्वान् । पञ्च सेदिवान् । सेदिवांसौ । सेदुषः । त्वद्भ्याम् । सुहिनस्तीति सुहिन् । सुहिंसौ । ध्वत् २ । ध्वसौ । २ ॥

## पुंसो. पुमन्स् ॥ १ । ४ । ७३ ॥

तदन्तत्सम्बन्धिनि घुटि ॥ पुमान् । पुमांसौ । हे पुमन् । पुंसः । याम् ३ । पुंसु । श्रेयान् । श्रेयांसम् । हे श्रेयन् । उशना । उशनसौ ॥

## वोशनसो नश्चामन्त्ये सौ ॥ १ । ४ । ८० ॥

लुक् ॥ हे उशनन् । हे उशन । हे उशनः । एवमनेहा । हे अ- । पुरुदशा । हे पुरुदशः । वेधा । वेधसौ । हे वेधः । सुवः । सौ २ । पिण्डग्रः । पिण्डग्रसौ २ ॥ दोः ॥ दोषौ । दोष्णः । दोष ॥

## अदसो द सेस्तु डौ ॥ २ । १ । ४३ ॥

त्यदा सौ सः ॥ असौ । असकौ । हे असौ । हे असकौ । दामिति किम् ? । अत्यदा ॥

## असुको वाकि ॥ २ । १ । ४४ ॥

पदा सावदस ॥ असुकः । हे असुक ॥

## मोवर्णस्य ॥ २ । १ । ४५ ॥

पदादेरदसो द ॥ मादुवर्णोऽनु । अमू २ ॥

## बहुष्वेरी ॥ २ । १ । ४६ ॥

अदसो मः परस्य ॥ अमी । अमुम् । अमून् ॥

## प्रागिनात् ॥ २ । १ । ४८ ॥

अदसो म परस्य वर्णस्योवर्णः ॥ अमुना । अमूभ्याम् ३ । अमीभिः । अमीभ्यः २ । अमुष्मात् । अमुष्य

२ । अमीषाम् । अमुष्मिन् । अमीषु । अमुकौ । अमुकः । अमुकैः । इत्यादि ॥

## अनडुह सौ ॥ १ । ४ । ७२ ॥

अन्तस्सम्बन्धिनि धुडन्तस्य धुटः प्राग् नोऽन्तः ॥ अनड्वान् । अनड्वाहौ । हे अनड्वन् । अनडुद्भ्याम् । अनडुत्सु ॥

## हो धुट्पदान्ते ॥ २ । १ । ८२ ॥

ढः ॥ लिट् । लिड् । लिड्भ्याम् । विश्वराट् २ । विश्वराडौ । नसान्ता चिन्तीह इत्यादीनीति ज्ञेयम् ॥ पर पर्णगृह्णगुणा ॥

## भ्वादेर्दादेर्घः ॥ २ । १ । ८३ ॥

हो धुटि प्रत्यये पदान्ते च ॥ गोधुक् २ । गोदुहौ । गोधुक्षु । भ्वादेः किम् ? । दामलिट् २ ॥

## मुहद्रुहष्णुहष्णिहो वा ॥ २ । १ । ८४ ॥

हो घो धुटि प्रत्यये पदान्ते च ॥ मुक् २ । मुट् २ । मुहौ । ध्रुक् २ । ध्रुट् २ । स्नुक् २ । स्नुट् २ । स्नुहौ । स्निक् २ । स्निट् २ । उष्णिक् २ । उष्णिहौ । उष्णिग्भ्याम् ३ ॥

इति श्रीतपोगच्छाचार्यविजयनन्दसूरिविजयसिंहसूरिपट्टपरम्परानिष्ठितगीतार्थत्वादिगुणोपेतशिष्यव्राप्तनामपद्मविजयचरणकमलसेविन्यायमानान्तेवासिनेमिविज्ञानाचार्यश्रीतपोगच्छाचार्यभट्टारकश्रीविजयनेमिसूरिविरचितायां लघुहेमप्रभायां व्यञ्जनान्ताः पुंलिङ्गाः ॥

---

## ॥ अथ व्यञ्जनान्ताः स्त्रीलिङ्गाः ॥

---

वागादयः स्रगादयः सुवाग्वत् ॥ स्रक् । स्रग् । स्रजौ । स्रजः । आद्रेर इत्यात्व आदित्यापि, स्या । स्ये । स्याः । सर्वाशब्दवत् ।

सा । या । एषा । एताम् । अन्वादेशे एनाम् । समित् २ । समिधौ । सुपर्वा । सुपर्वाणौ । आपः । अपः । अद्भिः । ककुप् । ककुभौ । इयम् । इमे । इमाः । इमाम् । एनाम् । अनया । आभ्याम् । आभिः । अस्यै । अत्र परत्वात्पूर्वमदादेशे पश्चात् स्यट् । अस्याः । अनयोः । आसाम् । अस्याम् । आसु । का । के । काः । चतस्रः २ । चतसृभिः । चतसृभ्यः २ । चतसृणाम् । चतसृषु । हे चतस्रः ॥ पदान्ते इति दीर्घे, गीः । गिरौ । गीर्भ्याम् । गीर्षु । एवं पुर्धुरादयः । द्यौः । पुवत् । दिक् २ । दिशौ । दृक् २ । दृशौ । प्रावृट् । प्रावृड् । प्रावृषौ । आशीः । पदत्वस्यासत्त्वाद्रत्वम् । आशिषौ । असौ । अमू । अमूः । अमूम् । अमुया । अमूभ्याम् । अमूभिः । अमुष्यै । अमुष्याः । अमुयोः । अमूषाम् । अमूषु ॥

## नहाहोर्धतौ ॥ २ । १ । ८५ ॥

धौ धुटि प्रत्यये पदान्ते च ॥ उपानत् २ । उपानहौ । उपानद्भ्याम् ॥

इति श्रीतपोगच्छाचार्यविजयदेवसूरिविजयसिंहसूरिपट्टपरम्पराप्रतिष्ठितगीतार्थत्वादिगुणोपेतवृद्धिचन्द्रापरनामवृद्धिविजयचरणकमलमिलिन्दायमानान्तेवासिसविग्नशाखीयतपागच्छाचार्यभट्टारकश्रीविजयनेमिसूरिविरचितायां लघुहेमप्रभायां व्यञ्जनान्ताः स्त्रीलिङ्गाः ॥

---

## ॥ अथ व्यञ्जनान्ता नपुंसकलिङ्गाः ॥

---

प्राक् ॥ प्राची । प्राञ्चि । प्रत्यक् । प्रतीची । प्रत्यञ्चि । एवं सम्यगादयः ॥ गवाक् । गोअक् । गोक् । पूजायां गवाङ् । गोअङ् । गोङ् । गोची । गवाञ्ची । गोअञ्ची । गोञ्ची । सुवल्ग् । सुवल्गी ॥

## लो वा ॥ १ । ४ । ६७ ॥

रलाभ्यां परा या धुड्जातिस्तदन्तस्य नपुंसकस्य शौ धुड्भ्य एव प्राग् नोऽन्तो वा ॥ सुवल्गि । सुवल्गि । असृक् २ । असृजी । असृञ्जि । असानि । अस्ना । असृजा । ऊर्क् २ । ऊर्जी । ऊर्ञ्जि । ऊर्जि । बहूर्ञ्जि । बहूर्जि । अन्येतु ऊर्जान्ते नरजाना नित्य सयोग बहूर्जशब्दे तु रनजाना वा सयोगमिच्छन्ति । जगत् २ । जगती । जगन्ति ॥

## अवर्णादश्नोऽन्तो वातुरीड्योः ॥ २ । १ । ११५ ॥

तुदत् । तुदन्ती । तुदती । तुदन्ति । भात् २ । भान्ती । भाती । भान्ति । अश्न इति किम् ? । क्रीणत् । क्रीणती ॥

## श्यशवः ॥ २ । १ । ११६ ॥

ईङ्योरतुरन्तो नित्यम् ॥ दीव्यन्ती । पचन्ती । भवत् । भवन्ती । महत् । महती । महान्ति । शकृन्ति । शकृानि । शकृन्ति । शकानि । ददत् २ । ददती ॥

## शौ वा ॥ ४ । २ । ९५ ॥

द्व्युक्तजक्षपञ्चतः परस्यान्तो नो लुक् ॥ ददन्ति । ददति । जक्षन्ति । जक्षति । एवं जाग्रन्ति । त्यत् २ । तत् २ । यत् २ । एतत् २ । अन्वादेशे एनत् इत्यादि । वेभिद् २ । वेभिदी । वेभिदि । एवं चेच्छिद् २ । अहः । अही । अहनी । अहानि । अह्ना । अहोभ्याम् । अह्नि । अहनि । अहःसु २ । हे अहः । ब्रह्म । ब्रह्मणी । ब्रह्माणि ॥

## क्लीबे वा ॥ २ । १ । ९३ ॥

आमन्त्र्ये नाम्नो नो लुक् ॥ हे ब्रह्मन् । हे ब्रह्म । दण्डि । दण्डिनी । दण्डीनि । बहुवृत्रहाणि । बहुपूषाणि । बह्वर्यमाणि । स्रग् । स्रग्वी ॥

## नि दीर्घः ॥ १ । ४ । ८९ ॥

अपो नागमे पूर्वस्वरस्य घुटि वा दीर्घः॥ स्वाम्पि। स्वम्पि। एवमत्यप्। बह्वप्। इदम्। इमे इमानि। इदम्। एनत्२। इत्यादि। किम्। के। कानि। वा। वारी। वारि। वारा। वार्भ्याम्। चत्वारि। विमलद्यु। विमलदिवी। द्व्यन्तोऽसप्ते इति पदत्वनिषेधादुत्वं न। धनु। धनुषी। धनूंषि। धनुर्भ्याम्। चक्षुः। चक्षुषी। चक्षूंषि। हविः। हविषी। हवींषि। पिपठीः। पिपठिषी। पिपठिषि। पयः। पयसी। पयांसि। एवं वचःप्रमुखाः। सुपुम्। सुपुंसी। सुपुमांसि। अद। अमू। अमूनि। शेषं पुंवत्। स्वनडुत्२। स्वनडुही। स्वनड्वांहि। काष्ठतट्२। काष्ठतक्षी। काष्ठतक्षि। काष्ठतड्भ्याम्॥

इति श्रीतपोगच्छाचार्यविजयदेवसूरिविजयसिंहसूरिपट्टपरम्पराप्रतिष्ठितगीतार्थत्वादिगुणोपेतवृद्धिचन्द्रापरनामवृद्धिविजयचरणकमलमिलिन्दायमानान्तेवासिसंविग्नशाखीयतपोगच्छाचार्यभट्टारकश्रीविजयनेमिसूरिविरचितायां लघुहैमप्रभायां व्यञ्जनान्ता नपुंसकलिङ्गाः॥

## ॥ अथ युष्मदस्मत्प्रक्रिया ॥

### त्वमहं सिना प्राक् चाकः ॥ २। १। १२ ॥

युष्मदस्मदोर्यथासङ्ख्यं तदन्तसम्बन्धिना ॥ त्वम्। अहम्। अतित्वम्। अत्यहम्। प्राक् चाक इति किम्?। त्वकम्। अहकम्।

### मन्तस्य युवावौ द्वयोः ॥ २। १। १० ॥

युष्मदस्मदोः स्यादौ ॥

### अमौ मः ॥ २। १। १६ ॥

युष्मदस्मद्भ्याम् ॥

### ...दस्मदो ॥ २। १। १६ ॥

व्यञ्जनादौ तदतत्सम्बन्धिनि स्यादौ आ. स्यात् ॥ युवाम् २। आवाम् २ ॥

यूयवय जसा ॥ २ । १ । १३ ॥

युष्मदस्मदो' प्राक् चाक' ॥ यूयम् । वयम् । यूयकम् । वयकम् ॥

त्वमौ प्रत्ययोत्तरपदे चैकस्मिन् ॥ २ । १ । ११ ॥

स्यादौ युष्मदस्मदोर्मन्तस्य । त्वाम् । माम ॥

शसो न ॥ २ । १ । १७ ॥

युष्मदस्मद्भ्या परस्य ॥ युष्मान् । अस्मान ॥

टाङ्योसि य ॥ २ । १ । ७ ॥

युष्मदस्मदो' ॥ त्वया । मया । युवाभ्याम् ३ । आवाभ्याम ३ । युष्माभि. । अस्माभि ॥

तुभ्यमह्य ङया ॥ २ । १ । १४ ॥

युष्मदस्मदो' ॥ तुभ्यम । मह्यम् । प्राक् चाक इत्येव । तुभ्यकम् । मह्यकम् ॥

अभ्य भ्यस ॥ २ । १ । १८ ॥

युष्मदस्मद्भ्यां परस्य चतुर्थीबहुवचनस्य ॥

शेषे लुक् ॥ २ । १ । ८ ॥

आत्वयत्वनिमित्तेतरस्यादौ युष्मदस्मदोरन्तस्य लुक् ॥ युष्मभ्यम । अस्मभ्यम । शेषे किम ? । त्वयि । मयि ॥

ङसेश्चाद् ॥ २ । १ । १९ ॥

युष्मदस्मद्भ्या परस्य पञ्चमीभ्यस ॥ त्वद् । मद् । युष्मद् । अस्मद् ॥

तवमम ङसा ॥ २ । १ । १५ ॥

युष्मदस्मदोः ॥ तव । मम । प्राक् चाक इत्येव । तवक । ममक । युवयोः २ । आवयो २ ॥

## आम आकम् ॥ २ । १ । २० ॥

युष्मदस्मद्भ्यां परस्य ॥ युष्माकम् । अस्माकम् । त्वयि । मयि । युष्मासु । अस्मासु । युष्मानस्मान् वाचष्टे युष्मयतेरस्मयतेश्च क्विपि युष्म् अस्म् इति मान्तत्वे एकदेशविकृतन्यायेन त्वमादय आदेशाः । त्वम् । अहम् । युषाम् २ । असाम् २ । यूयम् । वयम् । युषाम् । असाम् । युषान् । असान् । युष्या । अस्या । युषाभ्याम् ३ । असाभ्याम् ३ । यूषाभिः । असाभिः । तुभ्यम् । मह्यम् ॥

## मोर्वा ॥ २ । १ । ९ ॥

शेषे स्यादौ युष्मदस्मदोर्लुक् ॥ युषभ्यम् । युष्मभ्यम् । असभ्यम् । अस्मभ्यम् । युषत् । युष्मत् । असत् । अस्मत् । तव । मम । युष्योः । अस्योः । युषाकम् । युष्माकम् । असाकम् । अस्माकम् । युष्यि । अस्यि । युषासु । असासु । त्वां मां वातिक्रान्तः, अतित्वम् । अत्यहम् । अतित्वाम् ३ । अतिमाम् ३ । अतियूयम् । अतिवयम् । अतित्वान् । अतिमान् । अतित्वया । अतिमया । अतित्वाभ्याम् ३ । अतिमाभ्याम् ३ । अतित्वाभिः । अतिमाभिः । अतितुभ्यम् । अतिमह्यम् । अतित्वभ्यम् । अतिमभ्यम् । अतित्वत् २ । अतिमत् २ । अतितव । अतिमम । अतित्वयोः २ । अतिमयोः । अतित्वाकम् । अतिमाकम् । अतित्वयि । अतिमयि । अतित्वासु । अतिमासु । युवामावां वातिक्रान्तः, अतित्वम् । अत्यहम् । अतियुवाम् ३ । अत्यावाम् ३ । अतियूयम् । अतिवयम् । अतियुवाम् । अत्यावाम् । अतियुवान् । अत्यावान् । अतियुवया । अत्यावया । अतियुवाभ्याम् ३ । अत्यावाभ्याम् ३ । अतियुवाभिः । अत्यावाभिः ...भ्यम् । अतिमह्यम् । अतियुवभ्यम् ।

म। अतियुवत् २। अत्यावत् २। अतितव। अतिमम। अतियुवयो २। अत्यावयो २। अतियुवाकम्। अत्यावाकम्। अतियुवयि। अत्यावयि। अतियुवासु। अत्यावासु। युष्मानस्मान्वातिक्रान्त.। अतित्वम्। अत्यहम्। अतियुष्माम् ३। अत्यस्माम् ३। अतियूयम्। अतिवयम्। अतियुष्मान्। अत्यस्मान्। अतियुष्मया। अत्यस्मया। अतियुष्माभ्याम् ३। अत्यस्माभ्याम् ३। अतियुष्माभिः। अत्यस्माभिः। अतितुभ्यम्। अतिमह्यम्। अतियुष्मभ्यम्। अत्यस्मभ्यम्। अतियुष्मत् २। अत्यस्मत् २। अतितव। अतिमम। अतियुष्मयो २। अत्यस्मयो २। अतियुष्माकम्। अत्यस्माकम्। अतियुष्मयि। अत्यस्मयि। अतियुष्मासु। अत्यस्मासु ॥

## पदाद्युग्विभक्त्यैकवाक्ये वस्नसौ बहुत्वे ॥ २। १। २१॥

युष्मदस्मदो.॥ अन्वादेशे नित्यं विधानादिह विकल्पः। धर्मो वो रक्षतु। धर्मो नो रक्षतु। युष्मानस्मान् वा। तपो वो दीयते। तपो नो दीयते। युष्मभ्यमस्मभ्यं वा। शील व. स्वम्। शील न. स्वम्। युष्माकमस्माक वा। पदादिति किम्?। युष्मान् धर्मो रक्षतु। एकवाक्ये इति किम्?। अतियुष्मान् पश्यति॥ ओदनं पचत युष्माकं भविष्यति।

## द्वित्वे वान्नौ ॥ २। १। २२ ॥

पदात् परयोर्युष्मदस्मदोरेकवाक्ये॥ धर्मो वा युवां वा नौ आवां वा रक्षतु। एवं चतुर्थीषष्ठीभ्यामपि।

## ङेङसा तेमे ॥ २। १। २३ ॥

पदात्परयोर्युष्मदस्मदोरेकवाक्ये॥ धर्मस्ते दीयते। धर्मो मे दीयते। तुभ्यं मह्यं वा। धर्मस्ते स्वम्। धर्मो मे स्वम्। तव मम वा॥

## अमा त्वामा ॥ २। १। २४॥

पदात्परयोर्युष्मदस्मदोरेकवाक्ये ॥ धर्मस्त्वा - त्वा - वा पातु। धर्मो मा मा वा पातु ॥

## असदिवामन्त्र्य पूर्वम् ॥ २ । १ । २५ ॥

युष्मदस्मद्भ्यां पदम् ॥ जन ! जनौ ! जना ! वा त्वां युवां युष्मान् वा पातु धर्मः । पूर्वमिति किम् ? ।

"मयैतत् सर्वमाख्यात युष्माकं मुनि पुंगवाः ॥"

व्यवहितेऽप्यत्र पूर्वशब्दः । तेन चैत्र धर्मो वोऽव्यो रक्षतु इत्यत्र सपूर्वादिति विकल्पो न ॥

## जस्विशेष्य वामन्त्र्ये ॥ २ । १ । २६ ॥

युष्मदस्मद्भ्यां पूर्वमामन्त्र्यमसद् विशेषणे ॥ जिनाः ! शरण्या ! युष्मान्वो वा शरणं प्रपद्ये । अन्वादेशेऽपि । सिद्धाः क्षीणाष्टकर्माणोऽथो सिद्धाः ! शरण्या ! युष्मान् वो वा शरण प्रपद्ये। जसिति किम् ? । साधो सुविहित वोऽथो शरणं प्रपद्ये ॥

## नान्यत् ॥ २ । १ । २७ ॥

युष्मदस्मद्भ्यां पूर्वं जसन्तादन्यदामन्त्र्य विशेष्यमामन्त्र्ये विशेषणे परेऽसदिव न स्यात् ॥ साधो सुविहित त्वा शरणं प्रपद्ये ॥

## पादाद्योः ॥ २ । १ । २८ ॥

पदात् परयोर्युष्मदोर्वस्नसादिर्न ॥

" वीरो विश्वेश्वरो देवो युष्माकं कुलदेवता ।
स एव नाथो भगवानस्माकं पापनाशनः ॥ १ ॥"

द्विवचन युष्मदस्मदोरभिसम्बन्धार्थम् ॥ पादाद्योः किम् ? ।

"पान्तु वो देशनाकाले जैनेन्द्रा दशनांशवः ।
भवकूपपतज्जन्तुजातोद्धरणरज्जवः ॥ १ ॥"

चाहहवेवयोगे ॥ २ । १ । २९ ॥

पदात् परयोर्युष्मदस्मदोर्न वस्नसादिः ॥ ज्ञानं युष्मांश्च रक्षतु । एवम्, अह-ह-वैवैरप्युदाहार्यम्, योगग्रहणं साक्षाद्योगप्रतिपत्त्यर्थम् । तेन ज्ञानं च शीलं च मे स्वमित्यादि सिद्धम् ॥

दृश्यर्थैश्चिन्तायाम् ॥ २ । १ । ३० ॥

धातुभिर्योगे युष्मदस्मदोर्वस्नसादिर्न ॥ जनो युष्मान् संदृश्यागतः । जनो मामपेक्षते । दृश्यर्थैरिति किम् ? । जनो वो मन्यते । चिन्तायामिति किम् ? । जनो वः पश्यति ॥

नित्यमन्वादेशे ॥ २ । १ । ३१ ॥

पदात् परयोर्युष्मदस्मदोर्वस्नसादिः ॥ यूयं विनीतास्तद्वो गुरवो मानयन्ति । इत्यादि ॥

सपूर्वात् प्रथमान्ताद्वा ॥ २ । १ । ३२ ॥

पदात्परयोर्युष्मदस्मदोर्वस्नसादिः ॥ यूयं विनीतास्तद् गुरवो वो युष्मान् वा मानयन्ति । इत्यादि । गम्येऽप्यन्वादेशे भवति । ग्रामे कम्बलो वो युष्माकं वा स्वमथो । विद्यमानपूर्वादिति किम् ? । पटो युष्माकं स्वम् अथो च कम्बलः स्वम् ॥

इति श्रीतपोगच्छाचार्यविजयदेवसूरिविजयसिंहसूरिपट्टपरम्पराप्रतिष्ठितगीतार्थत्वादिगुणोपेतवृद्धिचन्द्रापरनामवृद्धिविजयचरणकमलमिलिन्दायमानान्तेवासिसविग्नशाखीयतपोगच्छाचार्यश्रीविजयनेमिसूरिविरचिताया लघुहैमप्रभाया युष्मदस्मत्प्रक्रिया ॥

॥ अथाव्ययानि ॥

स्वरादयोऽव्ययम् ॥ १ । १ । ३० ॥

स्वर् अन्तर् सनुतर् पुनर् प्रातर् ५ सायम् नक्तम् अस्तम् दिवा दोषा ५ ह्यस् श्वस् कम् शम् योस् १५ मयस् विहायसा रोदसी ओम् भूस् २० भुवस् स्वस्ति समया निकषा अन्तरा २५ पुरा बहिस् अवस् अधस् असाम्प्रतम् ३० अद्धा ऋतम् सत्यम् इद्धा मुधा ३५ मृषा वृथा मिथ्या मिथो मिथु ४० मिथस् मिथुस् मिथुनम् अनिशम् मुहुस् ४५ अभीक्ष्णम् मङ्क्षु झटिति उच्चैस् नीचैस् ५० शनैस् अवश्यम् सामि साचि विष्वक् ५५ अन्वक् ताजक् द्राक् स्राक् ऋधक् ६० पृथक् धिक् हिरुक् ज्योक् मनाक् ६५ ईषत् ज्योषम् जोषम् तूष्णीम् कामम् ७० निकामम् प्रकामम् अरम् वरम् परम् ७५ आरात् तिरस् मनस् नमस् भूयस् ८० प्रायस् प्रबाहु प्रबाहुक् प्रबाहुकम् आर्यं ८५ हलम् आर्यहलम् स्वयम् अलम् कु ९० बलवत् अतीव सुष्ठु दुष्ठु ऋते ९५ सपदि साक्षात् सन् प्रशान सनात् १०० सनत् सना नाना विना क्षमा १०५ आशु सहसा युगपत् उपांशु पुरतस् ११० पुरस् पुरस्तात् शश्वत् कुवित् आविस् प्रादुस् ११६ । इति स्वरादयः । बहुवचनमाकृतिगणार्थम् ॥ स्वरादयः स्वार्थस्य वाचका न तु चादिवद् द्योतकाः । अन्वर्थसंज्ञेयम् ॥

" सदृशं त्रिषु लिङ्गेषु सर्वासु च विभक्तिषु ।
वचनेषु च सर्वेषु यन्न व्येति तदव्ययम् ॥ १ ॥ "

अन्वर्थाश्रयणेन च तदन्तविधानात् परमोच्चैरित्यादावप्यव्ययसंज्ञा ॥

## चादयोऽसत्त्वे ॥ १ । १ । ३१ ॥

अव्ययानि स्युः ॥ निपाता इत्यपि पूर्वेषाम् । सत्त्वं लिङ्गसङ्ख्यावद् द्रव्यम् । इदं तदित्यादिसर्वनामव्यपदेश्यं विशेष्यमिति यावत् । असत्त्व इति किम् ? । च. समुच्चये । च अह ह वा एव एवम् नूनम् शश्वत् सूपत् कूपत् कुवित् नेत् चेत् । नचेत् चण कच्चित् यत्र नह नहि हन्त माकिस् न किस् मा माङ् न नञ् याव

ताव न्याव यावत् तावत् न्यावत् त्वै तुवै न्वै नुवै रै वै श्रौषट् वौषट् स्वधा वट् वाट् धेट् पाट् प्याट् फट् हुंफट् छंबट् अथ आत् स्वगा स्वा-हा अलम् धन् हि अम ओम अथो नो नोहि श्रौम् भगोस् अघोस् भो हहो हो अहो आहो उताहो हा ही ह हे हये अयि अये अरर अंग रे अरे अय ननु शुकम् सुकम् नुकम् हिकम् नहिकम् ऊम् हुम् कुम् उम् सुम् कम् हम् किम् हिम् अद् कद् यद् सद् इद् चिद् किद् स्विद् धन बन इव तु नु यथ कथम् किमुत किम् किंचित् किस्वित् यदस्वित् आहोस्वित् अहह नवै नवै नवा अन्यत् अन्यत्र नवे यत् अपकिम् चिप् पट् यशु खलु यदिनाम यहुत मन्युत यदा आतु यदि यद्यपि कथाच यथा तथा पुद् अथ पुरा यावत् तावत् दिष्ट्या मर्या भाम नाम स्म इतिह सह अमा समम् सधा साकम् सार्धम् ईम् सीम कीम् आम् आस् इति अव अर अट घाझा अनुषक् खोम् अ आ इ ई वे ऊ ऋ ॠ ऌ ॡ ए ऐ ओ औ भादय इति चादय. । बहुवच-नमाकृतिगणार्थम् ॥

अधणुतस्वाथा शस. ॥ १ । १ । ३२ ॥

एतदन्तं मामान्ययम् ॥ देवा अर्जुनतोऽभवन् । ततः । तत्र । इह । क । कदा । एतर्हि । अधुना । इदानीम् । सद्य । अद्य । परयवि । पूर्वेद्युः । उभयेद्यु । परुत् । परारि । ऐषमः । कर्हि । यथा । कथम् । पञ्चधा । एकधा । ऐकध्यम् । द्वैधम् । द्वेधा । पञ्चकृत्वः । द्विः । स-कृत् । बहुधा । प्राक् । दक्षिणतः । पश्चात् । पुरः । पुरस्तात् । उपरि । उपरिष्टात् । दक्षिणा । दक्षिणाहि । दक्षिणेन । द्वितीयाकरोति क्षे-त्रम् । शूलीकरोति । अग्निसात् सम्पद्यते । देवत्राकरोति । बहुश । अर्थग्रिति किम् ? । पथि द्वैधानि । आ शस इति किम् ? । पच-तिरूपम् ॥

विभक्तियमन्ततसाद्याभा. ॥ १ । १ । ३३ ॥

अव्ययानि स्युः ॥ अहंयुः । शुभंयुः । अस्तिक्षीरा । कुतः । यथा । तथा । कथम् । अहम् । शुभम् १ । कृतम् । पर्याप्तम् । २ । येन । तेन । चिरेण । अन्तरेण ३ । ते । मे । चिराय । अह्नाय । ४ । चिरात् । अकस्मात् । ५ । चिरस्य । अन्योन्यस्य । मम । ६ । एकपदे । अग्रे । प्रगे । प्राह्णे । हेतौ । रात्रौ । ७ । इत्यादयः स्याद्यन्तप्रतिरूपका । अस्ति । नास्ति । असि । अस्मि । ब्रूहि । मन्ये । शङ्के । अस्तु । भवतु । पूर्यते । स्यात् । इत्यादयस्त्याद्यन्तप्रतिरूपकाः ।

## वत्तस्याम् ॥ १ । १ । ३४ ॥

एतदन्तमव्ययम् ॥ मुनिवद्वृत्तम् । उरस्तः । उच्चैस्तराम् ॥

## क्त्वातुमम् ॥ १ । १ । ३५ ॥

एतदन्तमव्ययम् ॥ कृत्वा । प्रकृत्य । कर्तुम् । यावज्जीवमदात् । स्वादुंकारं भुङ्क्ते ॥

## गति ॥ १ । १ । ३६ ॥

अव्ययम् ॥ अदःकृत्य । अत्राव्ययत्वात्सो न ॥

## अव्ययस्य ॥ ३ । २ । ७ ॥

स्यादेर्लुप् ॥ स्वसम्बन्धिविज्ञानान्नेह । अत्युच्चैसौ ॥

इति श्रीतपोगच्छाचार्यविजयदेवसूरिविजयसिंहसूरिपट्टपरम्पराप्रतिष्ठितगीतार्थत्वादिगुणोपेतवृद्धिचन्द्रापरनामवृद्धिविजयचरणकमलमिलिन्दायमानान्तेवासिसविग्नशालीयतपोगच्छाचार्यभट्टारकश्रीविजयनेमिसूरिविरचितायां लघुहेमप्रभायामव्ययप्रकरणम् ॥

---

## ॥ अथ स्त्रीप्रत्ययाः ॥

---

## स्त्रियां नृतोऽस्वस्रादेर्डीः ॥ २ । ४ । १ ॥

राज्ञी ॥ कर्त्री ॥

### अधातूदृदितः ॥ २ । ४ । २ ॥

नाम्नः स्त्रियां ङीः ॥ भवन्ती । पचन्ती । भवती अतिभवती । अधात्विति किम् ? । सुकन् ॥

### अञ्चः ॥ २ । ४ । ३ ॥

नाम्नः स्त्रियां ङीः ॥ प्राची । प्रतीची ॥

### णस्वराघोषाद्वनो रश्च ॥ २ । ४ । ४ ॥

नाम्नः स्त्रियां ङीः ॥ वन् इति वनुक्वनिप्ङ्वनिपामविशेषेण ग्रहणम् । ण, अवावरी । अवानेति केचित् । धीवरी । मेरुदृश्वरी । विहितविशेषणात् शर्वरी । णस्वराघोषादिति किम् ? । सहयुध्वा ॥

### वा बहुव्रीहेः ॥ २ । ४ । ५ ॥

णस्वराघोषाद् विहितो यो वन् तदन्तात् स्त्रियां ङी रश्चान्तादेशः ॥ प्रियावावरी । प्रियावावा स्त्री ॥

### वा पादः ॥ २ । ४ । ६ ॥

बहुव्रीहेस्तन्निमित्तकपाच्छब्दात् स्त्रियां ङीर्वा ॥ द्विपदी । द्विपात् । पादमाचष्टे पात् त्रयः पादोऽस्यास्त्रिपादित्यत्र तन्निमित्तकत्वाभावान्न ॥

### ऊधसः ॥ २ । ४ । ७ ॥

बहुव्रीहेः स्त्रियां ङीः ॥ कुण्डोध्नी ।

### अशिशोः ॥ २ । ४ । ८ ॥

बहुव्रीहेः स्त्रियां ङीः ॥ अशिश्वी ॥

### सङ्ख्यादेर्हायनाद् वयसि ॥ २ । ४ । ९ ॥

गम्ये बहुव्रीहेः स्त्रियां ङीः ॥

अस्य ङ्यां लुक् ॥ २ । ४ । ८६ ॥

द्विहायनी ॥

चतुस्त्रेर्हायनस्य वयसि ॥ २ । ३ । ७४ ॥

नो णः स्यात् ॥ त्रिहायणी । चतुर्हायणी । वयसोऽन्यत्र त्रिहायना, चतुर्हायना शाला ।

दाम्न ॥ २ । ४ । १० ॥

सङ्ख्यादेर्बहुव्रीहेः स्त्रियां ङी ॥ द्विदाम्नी ।

अनो वा ॥ २ । ४ । ११ ॥

बहुव्रीहेः स्त्रियां ङीः ॥ बहुराज्ञी । बहुराजानौ । बहुराजे ॥

नाम्नि ॥ २ । ४ । १२ ॥

अन्नन्ताद् बहुव्रीहेः स्त्रियां नित्यं ङी ॥ अधिराज्ञी नाम ग्रामः ॥

नोपान्त्यवतः ॥ २ । ४ । १३ ॥

अन्नन्ताद्बहुव्रीहेः स्त्रिया ङी ॥ सुपर्वा । बहुव्रीहेरित्येव । अतिपर्वणी ॥

मनः ॥ २ । ४ । १४ ॥

नाम्न स्त्रिया ङीर्न ॥ सीमा । सीमानौ ॥

ताभ्यां वाप् डित् ॥ २ । ४ । १५ ॥

मन्नन्तादन्नन्ताच्च बहुव्रीहेः स्त्रिया वाप् स च डित् ॥ सीमे । सीमानौ । सुपर्वे । सुपर्वाणौ ॥

अजादेः ॥ २ । ४ । १६ ॥

तस्यैव स्त्रियामाप् ॥ अजा । बाला । ज्येष्ठा । पूर्वापहाणा । अपरापहाणा । त्रिफला । कुञ्चा । तस्यैवेति किम् ? । पञ्चाजी ॥

ऋ पात्पदे ॥ २ । ४ । १७ ।

कृतपाद्भवपादस्य ऋच्यर्थे पात्पदेति निपात्यते । त्रिपात् । त्रिपदा । ऋचीति किम् । द्विपदी । द्विपात् ॥

आत् ॥ २ । ४ । १८ ॥

नाम्नः स्त्रियामाप् ॥ खट्वाका । या । सा ॥

इच्चांपुसोऽनित्क्याप्परे ॥ २ । ४ । १०७ ॥

विहितस्यापो ह्रस्वो वा ॥ खट्विका । खट्वका । खट्वाका । अपुंस इति किम् ? । सर्विका । निद्वर्जनं किम् ? । दुर्गका । आनेव परो यस्मादिति किम् ? । अतिप्रियखट्वाका । विहितस्येति किम् ? । अखट्विका ॥

स्वज्ञाजभस्त्राधातुत्ययकात् ॥ २ । ४ । १०८ ॥

आपोऽनित्क्याप्परे इर्वा ॥ स्विका । स्वका । ज्ञिका । ज्ञका । अजिका २ । अभस्त्रिका २ । आर्यिका २ । चटकिका २ । धातुत्यवर्जनात् सुनयिका । सुपाकिका । इहत्यिका ॥

द्व्येषसूतपुत्रवृन्दारकस्य ॥ २ । ४ । १०९ ॥

अनित्क्याप्परे वा इ ॥ द्वके । द्विके । एषका । एषिका । कृतषत्वनिर्देशादेह । एतिके । एतिका । सूतिका । सूतका । पुत्रिका । पुत्रका । वृन्दारिका । वृन्दारका । अप्पर इति किम् ? । अनेषका । अद्वके ॥

वौ वर्तिका ॥ २ । ४ । ११० ॥

वा निपात्यते ॥ वर्तिका । वर्तका । वेरन्यत्र वर्तिका ॥

अस्यायत्तत्क्षिपकादीनाम् ॥ २ । ४ । १११ ॥

अनित्क्याप्परे इ ॥ कारिका । अनिदिति पर्युदासात् शका । यदादिवर्जनं किम् ? । यका । सका । क्षिपका । बहुवचनमाकृतिगणार्थम् ॥

नरिका मामिका ॥ २ । ४ । ११२ ॥

इत्थं निपात्यते ॥

तारका वर्णकाष्टका ज्योतिस्तान्तवपितृदेवत्ये ॥ २ । ४ । ११३ ॥

निपात्यते ॥ अन्यत्र तारिका । वर्णिका । अष्टिका खारी ॥

गौरादिभ्यो मुख्यान्ङी ॥ २ । ४ । १९ ॥

स्त्रियाम् ॥ मुख्यादित्यधिकारोऽयम् । गौरी । शबली । अनड्वाही । अनडुही । बहुवचनमाकृतिगणार्थम् । मुख्यादिति किम् ? । बहुनदा भूमिः ॥

मत्स्यस्य यः ॥ २ । ४ । ८७ ॥

ङ्या लुक् ॥ मत्सी ॥

व्यञ्जनात्तद्धितस्य ॥ २ । ४ । ८८ ॥

यो ङ्या लुक् ॥ मनुषी । तद्धितस्येति किम् ? । वैश्यी ॥

अणञेयेकण्नञ्स्नञ्टिताम् ॥ २ । ४ । २० ॥

अणादीना योऽत् तदन्तात्तेषामेव स्त्रियां ङीः ॥ औपगवी । औत्सी । सौपर्णेयी । शिलेयी । आक्षिकी । स्त्रैणी । पौंस्नी । जानुदघ्नी ।

वयस्यनन्त्ये ॥ २ । ४ । २१ ॥

अदन्तात्स्त्रियां ङी ॥ कुमारी । तरुणी । अनन्त्य इति किम् ? । वृद्धा । द्विवर्षेत्यादौ त्वर्थाद् वयो गम्यते ॥

द्विगोः समाहारात् ॥ २ । ४ । २२ ॥

अदन्तात्स्त्रियां ङी । पञ्चपूली । दशराजी । त्रिफलेत्यजादौ ॥

" ... समाहारे ।

... तान्तो वान्यस्तु सर्वो नपुंसक " ॥

परिमाणात्तद्धितलुक्यबिस्ताचितकम्बल्यात् ॥ २ । ४ । २३ ॥

द्विगोरन्तात् स्त्रियां ङीः ॥ द्विकुडवी । द्विपली । परिमाणादिति किम् ? । पञ्चाश्वा । तद्धितलुकीति किम् ? । द्विपण्या । बिस्तादिवर्जनात् द्विबिस्ता । द्व्याचिता । द्विकम्बल्या ॥

काण्डात्प्रमाणादक्षेत्रे ॥ २ । ४ । २४ ॥

द्विगोरन्तात्तद्धितलुकि स्त्रियां ङीः ॥ द्विकाण्डी रज्जुः । प्रमाणादिति किम् ? । द्विकाण्डा शाटी । अक्षेत्रे इति किम् ? । द्विकाण्डा क्षेत्रभक्तिः ॥

पुरुषाद्वा ॥ २ । ४ । २५ ॥

प्रमाणवाचिनो द्विगोः स्त्रियां ङीः ॥ द्विपुरुषी द्विपुरुषा परिखा । तद्धितलुकीत्येव । पञ्चपुरुषी ॥

रेवतरोहिणाद्भे ॥ २ । ४ । २६ ॥

स्त्रियां ङीः ॥ रेवती । रोहिणी ॥

नीलात्प्राण्योषध्योः ॥ २ । ४ । २७ ॥

स्त्रियां ङीः ॥ नीली गौः । नीली ओषधिः । अन्यत्र नीला शाटी ॥

क्ताच्च नाम्नि वा ॥ २ । ४ । २८ ॥

नीलात् स्त्रियां ङीः ॥ नीली । नीला । प्रवृद्धविलूनी । प्रवृद्धविलूना ॥

केवलमामकभागधेयपापापरसमानार्यकृतसुमङ्गलभेषजात् ॥ २ । ४ । २९ ॥

स्त्रियां ङीर्नाम्नि ॥ केवली नाम ज्योतिः । मामकीत्यादि ।

भाजगोणनागस्थलकुण्डकालकुशकामुककटक-

वरात् पक्वावपनस्थूलाकृत्रिमामत्रकृष्णायसीरिरंसुश्रोणिकेशपाशे ॥ २ । ४ । ३० ॥

स्त्रियां नाम्नि ङीः ॥ भाजी पक्वा चेत् । भाजान्या । गोणी आवपनम् । गोणान्या । नागी स्थूला । नागान्या । स्थली अकृत्रिमा । स्थलान्या । कुण्डी अमत्रम् । कुण्डान्या । काली कृष्णा । कालान्या । कुशी आयसी । कुशान्या । कामुकी रिरंसुः । कामुकान्या । कटी श्रोणिः । कटान्या । कबरी केशपाशः । कबरान्या । जातौ तु नाम्येव तस्या स्थौल्याभावात् । अमृते जारज कुण्ड इति जातिवचनात् कुण्डशब्दाज्जातिलक्षणो ङीर्भवत्येव । जानपदशब्दादपि वृत्ताविच्छत्यन्य । जानपदी वृत्ति । अन्यत्र जानपदा मदिरा ॥

नवा शोणादे ॥ २ । ४ । ३१ ॥

स्त्रियां ङीः ॥ शोणी । शोणा । बह्वी । बहुः ।

इतोऽक्त्यर्थात् ॥ २ । ४ । ३२ ॥

नाम्न स्त्रियां ङीर्वा ॥ भूमी । भूमि । अक्त्यर्थादिति किम् ? । कृति । अजननिः ॥

पद्धते ॥ २ । ४ । ३३ ॥

स्त्रियां ङीर्वा ॥ पद्धती । पद्धतिः ॥

शक्ते शस्त्रे ॥ २ । ४ । ३४ ॥

स्त्रियां ङीर्वा । शक्ती । शक्तिः ॥

स्वरादुतो गुणादखरो. ॥ २ । ४ । ३५ ॥

नाम्नः स्त्रियां ङीर्वा ॥ पट्वी । पटुः । स्वरात् किम् ? । पाण्डुर्भूमि । अखरोरिति किम् ? । खरु ॥

श्लिताद्वर्णान्तो नश्च ॥२।४।३६

स्त्रियां ङीर्वा ॥ श्येनी । श्येता । एवमेन्यादयः । लत्वे लोहिनी । लोहिता ॥

क्न पलितासितात् ॥ २ । ४ । ३७ ॥

स्त्रियां ङीर्वा तत्सन्नियोगे । पलिक्नी । पलिता । असिक्नी । असिता ॥

असहनञ्विद्यमानपूर्वपदात् स्वाङ्गादक्रोडादिभ्यः ॥ २ । ४ । ३८ ॥

अदन्तात्स्वाङ्गात् स्त्रियां ङीर्वा ॥ अतिकेशी । अतिकेशा । सहादिवर्जनात् सकेशा । अकेशा । विद्यमानकेशा । स्वाङ्गात् किम् ? । बहुयवा । अक्रोडादिभ्य इति किम् ? । कल्याणक्रोडा ।

" अविकारोऽद्रवं मूर्त्तं प्राणिस्थं स्वाङ्गमुच्यते ।
च्युतं च प्राणिनस्तत्तन्निभं च प्रतिमादिषु ॥ १ ॥ "

बहुशोफा । बहुकफा । सुज्ञाना । दीर्घमुखा शाला इत्यत्र स्वाङ्गत्वाभावान्न ङी' । च्युत चेत्यादि किम् ? । बहुकेशी रथ्या । पृथुमुखी पृथुमुखा प्रतिमा ॥

नासिकोदरोष्ठजङ्घादन्तकर्णशृङ्गाङ्गगात्रकण्ठात् ॥ २ । ४ । ३९ ॥

सहादिवर्जपूर्वपदात् स्वाङ्गात् स्त्रियां ङीर्वा ॥ तुङ्गनासिकी । तुङ्गनासिका । कृशोदरी । कृशोदरा । बिम्बोष्ठी । बिम्बोष्ठा । दीर्घजङ्घी । दीर्घजङ्घा । समदन्ती । समदन्ता । चारुकर्णी । चारुकर्णा । तीक्ष्णशृङ्गी । तीक्ष्णशृङ्गा । मृद्वङ्गी । मृद्वङ्गा । सुगात्री । सुगात्रा । सुकण्ठी । सुकण्ठा । नियमार्थमिदम् । तेन बहुस्वरसंयोगोपान्त्येभ्योऽन्येभ्यो न । सुललाटा । सुपार्श्वा ॥

नखमुखादनाम्नि ॥ २ । ४ । ४० ॥

सहादिवर्जपूर्वपदात् स्वाङ्गात् स्त्रियां ङीर्वा ॥ शूर्पनखी । शूर्प-

नखा। चन्द्रमुखी । चन्द्रमुखा। अनाम्नीति किम्?। शूर्पणखा। पूर्वपदस्थादिति णत्वम् ।

## पुच्छात् ॥ २ । ४ । ४१ ॥

सहादिवर्जपूर्वपदात् स्वाङ्गात् स्त्रियां ङीर्वा ॥ सुपुच्छी । सुपुच्छा ॥

## कबरमणिविषशरादेः ॥ २ । ४ । ४२ ॥

पुच्छात् स्त्रियां नित्यं ङीः ॥ कबरपुच्छी । मणिपुच्छी । विषपुच्छी । शरपुच्छी ॥

## पक्षाच्चोपमानादेः ॥ २ । ४ । ४३ ॥

पुच्छात् स्त्रियां ङीः ॥ उलूकपक्षी । उलूकपुच्छी ॥

## क्रीतात् करणादेः ॥ २ । ४ । ४४ ॥

अदन्तात् स्त्रियां ङीः ॥ अश्वक्रीती। करणग्रहणं किम्?। सुक्रीता। केचित्तु धनेन क्रीतेति आबन्तेनापि समासमिच्छन्ति। धनक्रीता ॥

## क्तादल्पे ॥ २ । ४ । ४५ ॥

नाम्नः करणादेः स्त्रियां ङीः ॥ अभ्रविलिप्ती द्यौः । अल्पे किम्?। चन्दनानुलिप्ता ॥

## स्वाङ्गादेरकृतमितजातप्रतिपन्नाद् बहुव्रीहेः ॥२।४।४६॥

क्तान्तात् स्त्रियां ङीः ॥ शङ्खभिन्नी । कृतादिवर्जनात् दन्तकृतेत्यादि । बहुव्रीहेः किम्?। हस्तपतिता ॥

## अनाच्छादजात्यादेर्नवा ॥ २ । ४ । ४७ ॥

कृतादिवर्जितक्तान्ताद् बहुव्रीहेः स्त्रियां ङीः ॥ शार्ङ्गरजग्धी । शार्ङ्गरजग्धा । आच्छादवर्जनात् वस्त्रच्छन्ना । जात्यादेः किम्?।

मातृयाता । अङ्गाद्यादित्येव । कुन्दकृता ॥

पत्युर्न ॥ २ । ४ । ४८ ॥

बहुव्रीहौ पत्यन्तात् स्त्रियां ङीर्वा नयोगेऽन्तस्य नश्च ॥ दृढपत्नी । दृढपतिः । मुख्यादित्येव । बहुभूस्पतिः पुरी ॥

सादे ॥ २ । ४ । ४९ ॥

पत्युः स्त्रियां ङीर्वा नयोगेऽन्तस्य नश्च ॥ ग्रामपत्नी । ग्रामपतिः । सादेः किम् ? । पतिरियम् । ग्रामस्य पतिरियम् । मुख्यादित्येव । अतिपतिः । गौणात्पीरघन्त्यम् ॥

सपत्न्यादौ ॥ २ । ४ । ५० ॥

पत्युः स्त्रियां ङीर्नश्चान्तस्य ॥ सपत्नी ।

ऊढायाम् ॥ २ । ४ । ५१ ॥

पत्युर्ङी स्त्रियां नश्चान्तस्य ॥ पत्नी ॥

पाणिगृहीतीति ॥ २ । ४ । ५२ ॥

पाणिगृहीतीप्रकाराः शब्दा ऊढायां निपात्यन्ते ॥ पाणिगृहीती । करगृहीती । ऊढायां किम् ? । पाणिगृहीता ॥

पतिवत्न्यन्तर्वत्न्यौ भार्यागर्भिण्योः ॥२।४।५३॥

निपात्येते ॥ पतिवत्नी । अन्तर्वत्नी । भार्येति किम् ? । पतिमती पृथ्वी । गर्भिणीति किम् ? । अन्तरस्या शालायामस्ति ॥

जातेरयान्तनित्यस्त्रीशूद्रात् ॥ २ । ४ । ५४ ।

अदन्तात् स्त्रियां ङीः ॥ जातिः काचित् संस्थानव्यङ्ग्या । तटी । सकृदुपदेशव्यङ्ग्यत्वे सति अत्रिलिङ्गा या । ब्राह्मणी । सत्यन्त किम् ? । देवदत्ता । विशेष्य किम् ? । शुक्ला । गोत्रचरणलक्षणा

च तृतीया । नाडायनी । बह्वृची । यदाहु

" आकृतिग्रहणा जातिर्लिङ्गानां च न सर्वभाक् ।
सकृदाख्यातनिर्ग्राह्या गोत्रं च चरणैः सह " ॥ १ ॥

जाते' किम् ? । मुण्डा । यान्त्वादिवर्जनात् क्षत्रिया । खट्वा । शूद्रा । धवयोगे तु शूद्री । मुख्यादित्येव । बहुसूकरा भूमि ॥

पाककर्णपर्णवालान्तात् ॥ २ । ४ । ५५॥

जाते' स्त्रियां ङी ॥ ओदनपाकी । आखुकर्णी । मुद्गपर्णी । गोवाली । जाते किम् ? । बहुपाका यवागूः ॥

असत्काण्डप्रान्तशतैकाञ्चः पुष्पात् ॥ २ । ४ । ५६ ॥

जाते स्त्रिया ङी' ॥ शङ्खपुष्पी । सदादिवर्जनात् सत्पुष्पेत्यादि ॥

असभस्त्राजिनैकशणपिण्डात्फलात् ॥ २ । ४ । ५७ ॥

जाते स्त्रिया ङी' ॥ दासीफली । समादिवर्जनात् सम्फलेत्यादि । औषध्य एता ॥

अनञो मूलात् ॥ २ । ४ । ५८ ॥

जाते, स्त्रिया ङी ॥ दर्भमूली । अनञः किम् ? । अमूला ॥

धवाद्योगादपालकान्तात् ॥ २ । ४ । ५९ ॥

स्त्रियामदन्तान्ङी. ॥ प्रष्ठी । पालकान्तवर्जनात् गोपालिका ॥

पूतक्रतुवृषाकप्यग्निकुसितकुसिदादै च ॥२।४।६०॥

योगात् स्त्रियामेभ्यो धववाचिभ्यो ङीस्तद्योगे चैषामैरन्तस्य ॥ पूतक्रतायी । एवं वृषाकपायी इत्यादयः । योगात् किम् ? । पूतक्रतुः ॥

मनोरौ च वा ॥ २ । ४ । ६१ ॥

...द् स्त्रियां ङीर्वा तद्योगे च ऐरन्तस्य । मनावी ... ॥

वरुणेन्द्ररुद्रभवशर्वमृडादान् चान्तः ॥ २ । ४ । ६२ ॥

धवाद्योगात् स्त्रीवृत्तेर्ङीः ॥ वरुणानी । एवमिन्द्राणीत्यादयः ॥

मातुलाचार्योपाध्यायाद्वा ॥ २ । ४ । ६३ ॥

धवाद्योगात् स्त्रीवृत्तेर्ङीस्तद्योगे चानन्तः ॥ मातुलानी । मातुली । आचार्यानी । आचार्यी । क्षुभादित्वाण्णत्वाभावः । उपाध्यायानी । उपाध्यायी ॥

सूर्याद्देवतायां वा ॥ २ । ४ । ६४ ॥

धवाद्योगात् स्त्रियां ङीस्तद्योगे चानन्तः ॥ सूर्याणी । सूर्या । देवतायां किम् ? । मानुषी सूरी । सूर्याणीति नेच्छन्त्यन्ये ॥

सूर्यागस्त्ययोरीये च ॥ २ । ४ । ८९ ॥

यो ङ्यां लुक् ॥ सूरी । आगस्ती ॥

यवयवनारण्यहिमाद्दोषलिप्युरुमहत्त्वे ॥ २ । ४ । ६५ ॥

स्त्रियां ङीस्तद्योगे चानन्तः ॥ दुष्टो यवो यवानी । यवनानां लिपिर्यवनानी । अरण्यानी । हिमानी ॥

अर्यक्षत्रियाद्वा ॥ २ । ४ । ६६ ॥

स्त्रियां ङीस्तद्योगे चानन्तः ॥ अर्याणी । अर्या । क्षत्रियाणी । क्षत्रिया । धवयोगे तु अर्यी । क्षत्रियी ॥

यञो डायन् च वा ॥ २ । ४ । ६७ ॥

यञन्तात् स्त्रियां ङीस्तद्योगे च डायनन्तो वा ॥ गार्ग्यायणी । गार्गी ॥

लोहितादिशकलान्तात् ॥ २ । ४ । ६८ ॥

यञन्तात् स्त्रियां ङीस्तद्योगे डायन् चान्तः ॥ लौहित्यायनी । शाकल्यायनी ॥

पावटाद्वा ॥ २ । ४ । ६९ ॥

यञन्तात् स्त्रियां ङीस्तद्योगे डायनन्तः ॥ पौतिमाष्यायणी । पौतिमाष्या । आवट्यायनी । आवट्या ॥

**कौरव्यमाण्डूकासुरेः ॥ २ । ४ । ७० ॥**

स्त्रियां ङीस्तद्योगे डायन् चान्तः॥ कौरव्यायणी। माण्डूकायनी। आसुरायणी॥

**इञ इत. ॥ २ ४ । ७१ ॥**

स्त्रिया ङी ॥ सौतगमी ॥

**नुर्जातेः ॥ २ । ४ । ७२ ॥**

इदन्तात् स्त्रियां ङी ॥ कुन्ती । दाक्षी । नुः किम ? । तित्तिरिः ॥

**उतोऽप्राणिनश्चायुरज्ज्वादिभ्य ऊङ् ॥ २ । ४ । ७३ ॥**

नुर्जातिवाचिनः स्त्रियाम ॥ कुरूः । कर्कन्धूः ॥

**बाह्वन्तकद्रुकमण्डलोर्नाम्नि ॥ २ । ४ । ७४ ॥**

स्त्रियामूङ् ॥ मद्रबाहूः । कद्रूः । कमण्डलूः । नाम्नि किम ? । वृत्तबाहुः ॥

**उपमानसहितसहितसहशफवामलक्ष्मणाद्यूरो ॥ २ । ४ । ७५ ॥**

स्त्रियामूङ् ॥ करभोरूः । एव सहितोरूरित्यादयः ॥ उपमानाद्यादेरिति किम । पीनोरुः ॥

**नारी सखी पङ्गू श्वश्रू ॥ २ । ४ । ७६ ॥**

एते निपात्या ॥

**यूनस्तिः ॥ २ । ४ । ७७ ॥**

स्त्रियाम ॥ युवतिः । युवतीत्यत्र तु इतोऽक्त्यर्थादिति ङीर्भविष्यति ॥

अनार्षे वृद्धेऽणिञो बहुस्वरगुरूपान्त्यस्यान्त्यस्य ष्यः ॥ २ । ४ । ७८ ॥

कारीषगन्ध्या ॥ वाराह्या । अनार्षे किम् ? । वासिष्ठी । वृद्धे किम् ? । वाराही । अणिञ इति किम् ? । आर्त्तभागी । बहुस्वरेति किम् ? । दाक्षी । गुरूपान्त्यस्येति किम् ? । औपगवी । अणिञन्तस्य सतो बहुस्वरस्येति किम् ? । दौवार्या ॥

ष्या पुत्रपत्योः केवलयोरीच् तत्पुरुषे ॥ २ । ४ । ८३ ॥

कारीषगन्धीपुत्रः ॥ कारीषगन्धीपतिः । केवलयोरिति किम् ? कारीषगन्ध्यापुत्रकुलम् । मुख्य इत्येव । अतिकारीषगन्ध्यापुत्रः ॥

बन्धौ बहुव्रीहौ ॥ २ । ४ । ८४ ॥

मुख्य आवन्तः ष्यः केवले ईच् ॥ कारीषगन्धीबन्धुः । केवल इत्येव । कारीषगन्ध्याबन्धुकुलम् । मुख्य इत्येव । अतिकारीषगन्ध्याबन्धुः ॥

मातमातृमातृके वा ॥ २ । ४ । ८५ ॥

मुख्य आवन्तः ष्यः केवले बहुव्रीहावीच् ॥ कारीषगन्धीमातः कारीषगन्ध्यामातः । कारीषगन्धीमाता । कारीषगन्ध्यामाता । कारीषगन्धीमातृकः । कारीषगन्ध्यामातृकः ॥

तिष्यपुष्ययोर्भाणि ॥ २ । ४ । ९० ॥

यो लुक् ॥ तैषी रात्रिः । पौषमहः ॥

कुलाख्यानाम् ॥ २ । ४ । ७९ ॥

अनार्षवृद्धाणिञन्तानामन्तस्य स्त्रियां ष्यः ॥ पौणिक्या । गौप्या । अनार्ष इत्येव । गौतमी ॥

क्रौड्यादीनाम् ॥ २ । ४ । ८० ॥

अणिञन्तानामन्तस्य स्त्रिया ष्य॰ ॥ क्रौड्या । चौपयत्या ॥

**भोजसूतयोः क्षत्रियायुवत्योः ॥ २ । ४ । ८१ ॥**

अन्तस्य स्त्रियां ष्य॰ । भोज्या । सूत्या ॥

**दैवयज्ञिशौचिवृक्षिसात्यमुग्रिकाण्ठेविद्धेर्वा ॥ २ । ४ । ८२ ॥**

स्त्रियामन्तस्य ष्यः ॥ दैवयज्ञी । दैवयज्ञ्या । शौचिवृक्ष्या । शौचिवृक्षी । सात्यमुग्र्या । सात्यमुग्री । काण्ठेविद्ध्या । काण्ठेविद्धी ॥

इति श्रीतपोगच्छाचार्यविजयदेवसूरिविजयसिंहसूरिपट्टपरम्पराप्रतिष्ठितगीतार्थ वादिगुणोपेतवृद्धिचन्द्रापरनामवृद्धिविजयचरणकमलमिलिन्दायमानान्तेवासिसविग्नशास्त्रीयतपोगच्छाचार्यभट्टारकश्रीविजयनेमिसूरिविरचितायां लघुहेमप्रभायां स्त्रीप्रत्ययः ॥

## ॥ अथ कारकाणि ॥

**क्रियाहेतुः कारकम् ॥ २ । २ । १ ॥**

कर्त्रादि ॥

**स्वतन्त्रः कर्ता ॥ २ । २ । २ ॥**

क्रियाहेतुः क्रियासिद्धौ स्वप्रधानो यः स कर्ता ॥ देवदत्तः पचति । देवदत्तेन पाचयति चैत्रः ॥

**कर्तुर्व्याप्यं कर्म ॥ २ । २ । ३ ॥**

कर्त्रा क्रियया यद्विशेषेणाप्तुमिष्यते तत्कारकं व्याप्यं कर्म च स्यात् ॥ तत्त्रेधा निर्वर्त्यं विकार्यं प्राप्यं च । तत्र यदसज्जायते जन्मना वा प्रकाश्यते तन्निर्वर्त्यम् । ... पुत्रं प्रसूते । प्रकृत्युच्छेदेन । गुणान्तरा-

धानेन वा यद्विकारमापाद्यते तद्विकार्यम्। काष्ठं दहति। काष्ठं लुनाति। यत्र तु क्रियाकृतो विशेषो नास्ति तत्प्राप्यम्। आदित्यं पश्यति। अस्य तु त्रिविधस्यापि अवान्तरव्यापारा निर्वृत्तिविकृत्याभासोपगमनानि। त्रिविधमप्येतत् त्रिविधम्। इष्टमनिष्टमनुभयं च। शिष्यं करोति। अहिं लङ्घयति। वृक्षच्छायां लङ्घयति। तत्कर्म द्विविधं प्रधानेतरभेदात्। तच्च द्विकर्मकेषु दुहिभिक्षिरुधिप्रच्छिचिब्रूशास्वर्थेषु याचिजयतिप्रभृतिषु नीहृकृष्वहेषु च भवति। याचिरनुनयार्थस्तेन भिक्ष्यर्थाद्भेदः। गां दोग्धि पयः। यदर्थं क्रियारभ्यते तत्प्रधानं तत्सिद्ध्यै यदितरया व्याप्यते गवादि तदप्रधानम्। प्रधानाविवक्षायां गवादेरेव प्राधान्यम्। आश्चर्यो गवां दोहोऽगोपेन। तत्र दुहादीनाम प्रधाने कर्मणि कर्मजः प्रत्ययो भवति। गौर्दुह्यते पयो मैत्रेण। न्यादीनां तु प्रधाने कर्मणि। नीयते नीता वा ग्राममजा। गत्यर्थानामकर्मकाणां तु णिगन्तानामप्रधान एव कर्मणि। गम्यते मैत्रो ग्रामम्। आस्यते मासं मैत्रः। बोधाहारार्थशब्दकर्मकाणां तु णिगन्तानामुभयत्र। बोध्यते शिष्यो धर्मम्। बोध्यते शिष्यं धर्म इति वा। भोज्यतेऽतिथिरोदनम्। भोज्यतेऽतिथिरोदनम्। पाठ्यते शिष्यो ग्रन्थम्। पाठ्यते शिष्यं ग्रन्थ इति वा। सर्वत्र चोक्ते कर्मणि प्रथमा। अभिधानं च प्रायेण त्यादिकृत्तद्धितसमासैः ॥

वाऽकर्मणामणिक्कर्ता णौ ॥ २ । २ । ४ ॥

कर्म ॥ पाचयति चैत्रं चैत्रेण वा। अत्राविवक्षितकर्माणो ग्राह्या उत्तरत्र नित्यग्रहणात्। गत्यर्थादीनां परत्वान्नित्य एव विधिः ॥

गतिबोधाहारार्थशब्दकर्मनित्याऽकर्मणामनीखाद्यदिह्वाशब्दायक्रन्दाम् ॥ २ । २ । ५ ॥

अणिगवस्थायां कर्ता णौ कर्म॥ गमयति मैत्रं ग्रामम्। देशान्तरप्राप्तेरन्यत्र न भवति। प्रियं गमयति मैत्रेण चैत्रं। बोधयति

गुरुः शिष्यं धर्मम् । दर्शयति रूपतर्कं कार्षापणम् । भोजयति बटुमोदनम् । जल्पयति मैत्रं द्रव्यम् । अध्यापयति बटुं वेदम् । आसयति मैत्र चैत्रः ॥ गत्यर्थादीनामिति किम्? । पाचयत्योदनं चैत्रेण मैत्रः । न्यादिवर्जनात् नाययति भारं चैत्रेणेत्यादि । प्रयोजकव्यापारेण णिगन्तवाच्येनाणिक्कर्तुर्व्याप्यत्वात् कर्मसंज्ञा सिद्धैव नियमार्थं तु वचनम् । तेनान्यधातुसम्बन्धिनः कर्तृत्वमेव ॥

## भक्षेर्हिंसायाम् ॥ २ । २ । ६ ॥

स्वार्थिकण्यन्तस्याणिक्कर्ता णौ कर्म ॥ भक्षयति सस्यं बलीवर्दान् मैत्रः । हिंसायां किम्? । भक्षयति पिण्डीं शिशुना । आहारार्थत्वात् प्राप्ते नियमार्थं वचनम् ॥

## वहे॰ प्रवेयः ॥ २ । २ । ७ ॥

अणिक्कर्ता णौ कर्म ॥ वाहयति भारं बलीवर्दान् । प्रवेय इति किम्? । वाहयति भारं मैत्रेण । प्राप्त्यर्थस्य प्रापणार्थस्य च वहेर्गत्यर्थत्वादकर्मकस्य च नित्याकर्मकत्वात् पूर्वेण प्राप्ते नियमार्थं वचनम् । अविवक्षितकर्मकस्य तु पक्षे विध्यर्थं चेदम् ॥

## ह्क्रोर्नवा ॥ २ । २ । ८ ॥

अणिक्कर्ता णौ कर्म ॥ प्राप्तेऽप्राप्ते चायं विकल्पः । प्राप्ते, विहारयति देशमाचार्यमाचार्येण वा । विकारयति सैन्धवान् सैन्धवैर्वा । अप्राप्ते, हारयति द्रव्यं मैत्रं मैत्रेण वा । कारयति कटं चैत्रं चैत्रेण वा ॥

## दृश्यभिवदोरात्मने ॥ २ । २ । ९ ॥

अणिक्कर्ता णौ वा कर्म ॥ दर्शयते राजा भृत्यान् भृत्यैर्वा । अभिवादयते गुरुं शिष्यं शिष्येण वा । आत्मने इति किम्? । दर्शयति रूपतर्कः कार्षापणम्

नाथ ॥ २ । २ । १० ॥

आत्मनेपदविषयस्य व्याप्यं वा कर्म ॥ सर्पिष सर्पिषो नाथते। आत्मन इत्येव । पुत्रमुपनाथति पाठाय ॥

स्मृत्यर्थदयेश ॥ २ । २ । ११ ॥

व्याप्यं कर्म वा ॥ मातर मातुर्वा स्मरति । सर्पिष सर्पिषो दयते । लोकाना लोकान्वेष्टे ॥

कृग प्रतियत्ने ॥ २ । २ । १२ ॥

व्याप्यं कर्म वा । एधोदकस्योपस्कुरुते, एधोदक वा ॥

रुजाऽर्थस्याऽज्वरिसन्तापेर्भावे कर्त्तरि ॥ २ । २ । १३ ॥

व्याप्य वा कर्म ॥ चौरस्य चौर वा रुजति रोग । अज्वरिसन्तापेरिति किम् ? । आतुरं ज्वरयति सन्तापयति वा रोग । भावे कर्त्तरीति किम् ? । मैत्र रुजति श्लेष्मा ॥

जासनाटक्राथपिषो हिंसायाम् ॥ २ । २ । १४ ॥

व्याप्य कर्म वा ॥ चौरस्य चौर वोज्जासयति । चौरस्य चौरं वा वोन्नाटयति । चौरस्योत्क्राथयति । चौरमुत्क्राथयति । चौरस्य चौरं वा पिनष्टि । आकारोपान्त्यनिर्देशादाकारश्रुतावेवेदम् । तेन दस्युमुदजीजसत् । अत एव क्राथे कर्माभावे ह्रस्वत्वाभावः । हिंसायामिति किम् ? । चौर बन्धनाज्जासयति ॥

निप्रेभ्यो घ्नः ॥ २ । २ । १५ ॥

हिंसार्थस्य व्याप्य कर्म वा ॥ बहुवचन समस्तव्यस्तविपर्यस्तपरिग्रहार्थम् । चौरस्य चौरं वा निप्रहन्ति । निहन्ति । प्रहन्ति । प्रणिहन्ति । हिंसायामित्येव । रागान्निहन्ति ।

विनिमेयद्यूतपण पणव्यवहोः ॥ २ । २ । १६ ॥

व्याप्यं कर्म वा ॥ शतस्य शत वा पणायति। दशानां दश वा व्यवहरति। विनिमेयद्यूतपणमिति किम्? । साधून् पणायति।

उपसर्गाद्दिवः ॥ २।२।१७ ॥

व्याप्यौ विनिमेयद्यूतपणौ कर्मसंज्ञौ वा॥ शतस्य शत वा प्रदीव्यति॥

न ॥ २।२।१८ ॥

अनुपसर्गस्य दिवो विनिमेयद्यूतपणौ व्याप्यौ कर्म संज्ञौ॥ शतस्य दीव्यति॥

करणञ्च ॥ २।२।१९ ॥

दिव करण कर्म करणञ्च युगपत्। अक्षान्क्षैर्वा दीव्यति। अनैर्देवयते मैत्रश्चैत्रेण ॥

अधे शीङ्स्थास आधार ॥ २।२।२० ॥

कर्म ॥ ग्राममधिशेते, अधितिष्ठति, अध्यास्ते ॥

उपान्वध्याङ्वस ॥ २।२।२१॥

आधार कर्म स्यात्॥ ग्राममुपवसति। अनुवसति। अधिवसति। आवसति। साहचर्यादुपस्य स्थानार्थस्यैव ग्रहणम्। तेनेह न। ग्रामे उपवसति।,अटाधनटाद्योरनदादेरेव ग्रहणमिति वस्तेर्न ॥

वाऽभिनिविश ॥ २।२।२२॥

आधार' कर्म ॥ व्यवस्थितविभाषेयम्। तेन ग्राममभिनिविशते। कल्याणेऽभिनिविशते ॥

कालाध्वभावदेश वा कर्म चाकर्मणाम्॥ २।२।२३॥

आधार कर्म युगपत् ॥ मासमास्ते। मासे आस्ते। क्रोश २ स्वपिति। गोदोहमास्ते २। कुरूनास्ते २। अविवक्षितकर्माणोऽप्यकर्मका'। मास पच[illegible] चेति किम्? मासमास्यते। अकर्म-

णामिति किम् ? रात्रावुद्देशोऽधीतः ॥

## साधकतम करणम् ॥ २ । २ । २४ ॥

क्रियाया कारकम् ॥ दानेन भोगानाप्नोति ॥ यद्व्यापारानन्तर क्रियासिद्धिर्विवक्ष्यते तत्साधकतमम् ॥

## कर्माभिप्रेयः सम्प्रदानम् ॥ २ । २ । २५ ॥

व्याप्येन क्रियया वा य श्रद्धानुग्रहादिकाम्ययाभिसम्बध्नाति स कर्माभिप्रेय' ॥ देवाय बलिं ददाति । राज्ञे कार्यमाचष्टे । पत्ये शेते ॥

## स्पृहेर्व्याप्य वा ॥ २ । २ । २६ ॥

सम्प्रदानम् ॥ पुष्पेभ्य' पुष्पाणि वा स्पृहयति ॥

## क्रुद्द्रुहेर्ष्यासूयार्थैर्यं प्रति कोप ॥ २ । २ । २७ ॥

तत्सम्प्रदानम् ॥ मैत्राय क्रुध्यति, द्रुह्यति, ईर्ष्यति, असूयति । य प्रतीति किम् ? । मनसा क्रुध्यति । कोप इति किम् ? । शिष्यस्य क्रुध्यति विनयार्थम् ॥

## नोपसर्गात् क्रुद्द्रुहा ॥ २ । २ । २८ ॥

यं प्रति कोपस्तत्सम्प्रदानम् ॥ मैत्रमभिक्रुध्यति, अभिद्रुह्यति ॥

## अपायेऽवधिरपादानम् ॥ २ । २ । २९ ॥

आपायेनानधिष्ठित ॥ ग्रामादागच्छति । कुसूलात्पचति । साङ्काश्यकेभ्यः पाटलिपुत्रका अभिरूपतरा' । अपायश्च कायसंसर्गपूर्वको बुद्धिसंसर्गपूर्वकश्च विभाग उच्यते। तेनाधर्माज्जुगुप्सते, विरमति। धर्मात्प्रमाद्यति। शृङ्गाच्छरो जायते। विवक्षान्तरे त्वपादानत्वाभावे यथायोग विभक्तयो भवन्ति । शृङ्गे शरो जायते इत्यादि ॥

## क्रियाश्रयस्याधारोऽधिकरणम् ॥ २ । २ । ३० ॥

तत्पोन वैषयिकौपश्लेषिकाभिव्यापक सामीप्यकं नैमित्ति-

कर्मौपचारिकं चेति । दिवि देवाः । कटे आस्ते । तिलेषु तैलम् । गङ्गायां घोषः । युद्धे सन्नह्यते । अङ्गुल्यग्रे करिशतम् ॥

नाम्नः प्रथमैकद्विबहौ ॥ २ । २ । ३१ ॥

वर्तमानात् स्वार्थे ॥ डित्थः । गौः । शुक्लः । कारकः । दण्डी ॥

आमन्त्र्ये ॥ २ । २ । ३२ ॥

नाम्नः प्रथमा ॥ हे देव । आमन्त्र्य इति किम् । राजा भव ॥

गौणात्समयानिकषाहाधिगन्तरान्तरेणातियेनतेनैर्द्वितीया ॥ २ । २ । ३३ ॥

नाम्नः ॥ समया ग्रामम् । निकषा गिरिम् । हा मैत्रं व्याधिः । धिग् जाल्मम् । अन्तरान्तरेण च निषधं नीलं च विदेहाः । अन्तरेण धर्मं न सुखम् । साहचर्यान्निपातावेतौ । अतिवृद्धं कुरून्महद्बलम् । येन पश्चिमां गतः । तेन पश्चिमां नीतः । गौणादिति किम् ? । अन्तरा गार्हपत्यमाहवनीयं च वेदिः ॥

द्वित्वेऽधोऽध्युपरिभिः ॥ २ । २ । ३४ ॥

योगे गौणान्नाम्नो द्वितीया ॥ षष्ठ्यपवादः । अधोऽधः, अध्यधि, उपर्युपरि ग्रामम् । द्वित्वे इति किम् ? । अधः प्रासादस्य । असामीप्याद्द्वित्वं न ॥

सर्वोभयाभिपरिणा तसा ॥ २ । २ । ३५ ॥

युक्ताद् गौणान्नाम्नो द्वितीया ॥ सर्वत उभयतोऽभितः परितो वा ग्रामं क्षेत्राणि ॥

॥ २ । २ । ३६ ॥

...ो द्वितीया ॥ ...मभि ...

विद्युत्। वृक्ष वृक्षमभि सेकः। साधुर्मत्रो मातरमभि। लक्षणादिषु किम्?। यदत्र ममाभि स्यात् तद्दीयताम् ॥

भागिनि च प्रतिपर्यनुभि ॥ २ । २ । ३७ ॥

लक्षणादिषु वर्तमानाद् गौणान्नाम्नो द्वितीया ॥ यदत्र मां प्रति, परि, अनु वा स्यात् तद्दीयताम्। वृक्ष प्रति, परि, अनु वा विद्युत्। वृक्ष वृक्षं प्रति, परि, अनु वा सिञ्चति। साधुर्देवदत्तो मातरं प्रतिपर्यनु वा। एतेष्विति किम्? अनु वनस्याशनिर्गता ॥

हेतुसहार्थेऽनुना ॥ २ । २ । ३८ ॥

हेतुर्जनक। सहार्थस्तुल्ययोगो विद्यमानता च तद्विषयोऽपि उपचारात्। तयोर्वर्तमानादनुना युक्ताद् द्वितीया ॥ जिनजन्मोत्सवमन्वागच्छन् सुरा। गिरिमन्ववसिता सेना ॥

उत्कृष्टेऽनूपेन ॥ २ । २ । ३९ ॥

युक्ताद् द्वितीया॥ अनु सिद्धसेन कवय। उपोमास्वातिं सङ्ग्रहीतार ॥

कर्मणि ॥ २ । २ । ४० ॥

नाम्नो द्वितीया ॥ कट करोति। इत्यादि। क्रियते कट। आरूढवानरो वृक्ष इत्यादिषु त्यादिकृत्तद्धितसमासैरभिहितत्वात्, लोकव्यवहारश्चाभिहितेऽर्थे शब्दप्रयोगायोगान भवति ॥

क्रियाविशेषणात् ॥ २ । २ । ४१ ॥

द्वितीया ॥ स्तोक पचति ॥

कालाध्वनोर्व्याप्तौ ॥ २ । २ । ४२ ॥

द्योत्याया वर्तमानान्नाम्नो द्वितीया ॥ मास गुडधाना, कल्याणी, अधीते वा। क्रोश गिरिः, कुटिला नदी, अधीते वा। व्याप्तौ किम्?। मासस्य मासे वा द्व्यहं गुडधाना। क्रोशस्य क्रोशे वा

एकदेशे कुटिला नदी ॥

## सिद्धौ तृतीया ॥ २ । २ । ४३ ॥

कालाध्ववाचिभ्याम् ॥ मासेन मासाभ्याम् मासैर्वावश्यकमधीतम्। क्रोशेन क्रोशाभ्यां क्रोशैर्वा प्राभृतमधीतम्। सिद्धौ किम्?। मासमधीत आचारो नानेन गृहीतः ॥

## हेतुकर्तृकरणेत्थंभूतलक्षणे ॥ २ । २ । ४४ ॥

नाम्नस्तृतीया ॥ धनेन कुलम्। चैत्रेण कृतम्। दात्रेण लुनाति। अपि त्वं कमण्डलुना छात्रमद्राक्षीः ॥

## सहार्थे ॥ २ । २ । ४५ ॥

गम्यमाने नाम्नस्तृतीया ॥ पुत्रेण सहागत ।

"एकेनापि सुपुत्रेण सिंही स्वपिति निर्भयम्।
सहैव दशभिः पुत्रैर्भारं वहति गर्दभी ॥ १ ॥"

गौणादित्येव । सहोभौ चरतो धर्मम् ॥

## यद्भेदैस्तद्वदाख्या ॥ २ । २ । ४६ ॥

यस्य भेदिनो भेदैस्तद्वतोऽर्थस्य निर्देशः स्यात् तद्वाचिनस्तृतीया ॥ अक्ष्णा काणः। पादेन खञ्जः। प्रकृत्या दर्शनीयः। तद्वद्ग्रहणं किम्?। अक्षि काणमस्य। आख्येति प्रसिद्धिपरिग्रहार्थम्। तेन अक्ष्णा दीर्घ इति न स्यात्।

## कृताद्यैः ॥ २ । २ । ४७ ॥

निषेधार्थैर्युक्तात् तृतीया ॥ कृतं तेन। किं गतेन। कृतम् भवतु अलं किम् एवमकारा कृतादय ॥

## काले भान्नवाधारे ॥ २ । २ । ४८ ॥

तृतीया पुष्ये वा पायसमश्नीयात्। काले किम्?।

पुण्ये(ऽर्कः ॥

प्रसितोत्सुकाऽवबद्धै ॥ २ । २ । ४९ ॥

युक्तादाराग्गृहेस्तृतीया वा॥ केशैः केशेषु वा प्रसित , उत्सुक., अवबद्ध. ॥

व्याप्ये द्विद्रोणादिभ्यो वीप्सायाम् ॥ २ । २ । ५० ॥

वा तृतीया॥ द्विद्रोणेन, द्विद्रोणं २ वा धान्य क्रीणाति । पञ्चकेन पञ्चक २ वा पशून् क्रीणाति ॥

समो ज्ञोऽस्मृतौ वा ॥ २ । २ । ५१ ॥

व्याप्यात्तृतीया ॥ मात्रा मातरं वा सजानीते । अस्मृताविति किम् ?। मातरं सञ्जानाति ॥

दाम सम्प्रदानेऽधर्म्ये आत्मने च ॥ २ । २ । ५२ ॥

सपूर्वस्य वर्तमानात्तृतीया ॥ दास्या सम्प्रयच्छते कामुकः । अधर्म्ये इति किम् ? । पत्न्यै सम्प्रयच्छति ॥

चतुर्थी ॥ २ । २ । ५३ ॥

सम्प्रदाने वर्तमानात् । शिष्याय धर्ममुपदिशति ॥

तादर्थ्ये ॥ २ । २ । ५४ ॥

सम्बन्धविशेषे द्योत्ये गौणान्नाम्नःषष्ठ्यपवादश्चतुर्थी । यूपाय दारु । रन्धनाय स्थाली ॥

रुचिकृप्यर्थधारिभि प्रेयविकारोत्तमर्णेषु॥२।२।५५॥

वर्तमानाच्चतुर्थी ॥ मैत्राय रोचते धर्म । मूत्राय कल्पते यवागू । मैत्राय शत धारयति ॥

प्रत्याङः श्रुवार्थिनि ॥ २ । २ । ५६ ॥

युक्ताद् वर्तमानाच्चतुर्थी ॥ द्विजाय गां प्रतिशृणोति, आशृणोति वा ॥

## प्रत्यनोर्गृणाख्यातरि ॥ २ । २ । ५७ ॥

युक्ताद् वर्तमानाच्चतुर्थी ॥ गुरवे प्रतिगृणाति, अनुगृणाति वा ॥

## यद्वीक्ष्ये राधीक्षी ॥ २ । २ । ५८ ॥

तद्वृत्तेश्चतुर्थी ॥ मैत्राय राध्यति ईक्षते वा ॥

## उत्पातेन ज्ञाप्ये ॥ २ । २ । ५९ ॥

वर्तमानाच्चतुर्थी ॥

"वाताय कपिला विद्युदातपायातिलोहिनी ।
पीता वर्षाय विज्ञेया दुर्भिक्षाय सिता भवेत्॥ १ ॥"

## श्लाघह्नुस्थाशपा प्रयोज्ये ॥ २ । २ । ६० ॥

युक्ताज्ज्ञाप्ये वर्तमानाच्चतुर्थी ॥ मैत्राय श्लाघते ह्नुते तिष्ठते शपते वा । प्रयोज्य इति किम् ? । मैत्रायात्मानं श्लाघते । आत्मनो मा भूत् ॥

## तुमोऽर्थे भाववचनात् ॥ २ । २ । ६१ ॥

स्वार्थे षष्ठीहेतुतृतीयापवादश्चतुर्थी ॥ पाकाय व्रजति ॥

## गम्यस्याप्ये ॥ २ । २ । ६२ ॥

तुमो वर्तनाच्चतुर्थी ॥ फलेभ्यो व्रजति ॥

## गतेर्नवाऽनाप्ते ॥ २ । २ । ६३ ॥

आप्ये वर्तमानाच्चतुर्थी ॥ ग्रामं ग्रामाय वा याति । विमनष्ट पन्थानं पथे वा याति । गते' किम् ? । स्त्रियं गच्छति । मनसा मेरुं गच्छति । अनाप्त इति किम् ? । सम्प्राप्ते मा भूत् । पन्थानं याति । कृद्योगे तु परत्वात् षष्ठ्येव । ग्रामस्य गन्ता ॥

## मन्योऽतिकुत्सने ॥ २ । २ । ६'

व्याप्ये वर्त्तमानाच्चतुर्थी वा ॥ न त्वा तृणाय तृणं वा मन्ये । मन्यस्येति किम् ? । न त्वा तृण मन्वे । नावादिवर्जनात् न त्वा नावमन्नं शुकं शृगाल काक वा मन्ये । कुत्सन इति किम् ? । न त्वा रत्न मन्ये । करणाश्रयणं किम् ? । युष्मदो मा भूत् । अतीति किम् ? । त्वा तृण मन्ये ॥

## हितसुखाभ्याम् ॥ २ । २ । ६५ ॥

युक्ताच्चतुर्थी वा ॥ आतुराय आतुरस्य वा हित सुखं वा ॥

## तद्भद्रायुष्यक्षेमार्थार्थेनाशिषि ॥ २ । २ । ६६ ॥

गम्याया युक्ताच्चतुर्थी वा ॥ हित पथ्य सुखं शं भद्रमायुष्य क्षेम कुशलमर्थं कार्यं वा जीवेभ्यो जीवाना वा भूयात् ॥

## परिक्रयणे ॥ २ । २ । ६७ ॥

वर्त्तमानाच्चतुर्थी वा ॥ शताय शतेन वा परिक्रीत । परीति किम् ? । शतेन क्रीणाति । करणाश्रयण किम् ? । शताय परिक्रीतो मासम् । मासान्माभूत् ॥

## शक्तार्थवषड्नमःस्वस्तिस्वाहास्वधाभिः ॥२।२।६८॥

युक्तान्नित्य चतुर्थी ॥ शक्तः प्रभुर्वा मल्लो मल्लाय । वषडग्नये । नमोऽर्हद्भ्यः । स्वस्ति प्रजाभ्यः । इन्द्राय स्वहा । पितृभ्य स्वधा । आशिषि परत्वान्नित्यमेव । स्वस्ति सघाय भूयात् ॥

## पञ्चम्यपादाने ॥ २ । २ । ६९ ॥

ग्रामादागच्छति ॥

## आङावधौ ॥ २ । २ । ७० ॥

युक्ताद् वर्त्तमानात् पञ्चमी ॥ आपाटलिपुत्राद् वृष्टो मेघ । आ कुमारेभ्यो यशो गत गौतमस्य ॥

पर्यपाभ्यां वर्ज्ये ॥ २ । २ । ७१ ॥

वर्तमानाद्युक्तात्पञ्चमी ॥ परि अप वा पाटलिपुत्राद् वृष्टो देवः ॥

यतः प्रतिनिधिप्रतिदाने प्रतिना ॥ २ । २ । ७२ ॥

तद्वाचिनः पञ्चमी ॥ अभयकुमारः श्रेणिकतः प्रति । तिलेभ्यः प्रति माषानस्मै प्रयच्छति ॥

आख्यातर्युपयोगे ॥ २ । २ । ७३ ॥

वर्तमानात्पञ्चमी ॥ उपयोगो नियमपूर्वकविद्याग्रहणम् । उपाध्यायादधीते शास्त्रम्, आगमयति वा । उपयोग इति किम् ? । नटस्य शृणोति ॥

गम्ययपः कर्माधारे ॥ २ । २ । ७४ ॥

वर्तमानात् पञ्चमी ॥ प्रासादादासनाद् वा प्रेक्षते ॥

प्रभृत्यन्यार्थदिक्शब्दबहिरारादितरैः ॥ २ । २ । ७५ ॥

युक्तात् पञ्चमी ॥ ततः प्रभृति । ग्रीष्मादारभ्य । अन्यो भिन्नो वा मैत्रात् । ग्रामात् पूर्वः । बहिरारादितरो वा ग्रामात् ॥

ऋणाद्धेतोः ॥ २ । २ । ७६ ॥

पञ्चमी ॥ शताद् बद्धः । हेतोरिति किम् ? । शतेन बद्धः ॥

गुणादस्त्रियां नवा ॥ २ । २ । ७७ ॥

हेतोः पञ्चमी ॥ जाड्याज्जाड्येन वा बद्धः । अस्त्रिया किम् ? । बुद्ध्या मुक्तः ॥

आरादर्थैः ॥ २ । २ । ७८ ॥

युक्तात्पञ्चमी वा ॥ आराद् दूरान्तिकयोः । दूरमन्तिकं वा ग्रामस्य ग्रामाद्वा ॥

स्तोकाल्पकृच्छ्रकतिपयादसत्त्वे करणे ॥ २। २। ७९ ।

पञ्चमी वा ॥ यतो द्रव्ये शब्दप्रवृत्तिः स पर्यायो गुणोऽसत्त्वम् तेनैव वा रूपेणाभिधीयमानं द्रव्यादि । स्तोकात् स्तोकेन वा मुक्तः एवमल्पात् अल्पेनेत्यादि। असत्त्व इति किम् ?। स्तोकेन विषेण हतः

अज्ञाने ज्ञः षष्ठी ॥ २ । २ । ८० ॥

करणे ॥ सर्पिषो जानीते । आज्ञान इति किम् ? । स्वरेण पु जानाति ॥

शेषे ॥ २ । २ । ८१ ॥

कर्मादिभ्योऽन्यस्तदविवक्षारूप स्वस्वामिभावादिसम्बन्धविशे शेषस्तत्र षष्ठी ॥ राज्ञः पुरुषः । माषाणामश्नीयात् ॥

रिरिष्टात्स्तादस्तादसतसाता ॥ २ । २ । ८२ ॥

एतदन्तैर्युक्तात्षष्ठी ॥ उपरि, उपरिष्टात्, परस्तात्, पुरस्तात् पुरः, दक्षिणतः, अधरात् वा ग्रामस्य ॥

कर्मणि कृतः ॥ २ । २ । ८३ ॥

षष्ठी ॥ अपां स्रष्टा । गवां दोहः । कर्मणीति किम् ? । शब्दे भेत्ता । स्तोकं पक्ता । कृत इति किम् ? । भुक्तपूर्वी ओदनम् ।

द्विषो वाऽतृशः ॥ २ । २ । ८४ ॥

कर्मणि षष्ठी ॥ चौरस्य चौरं वा द्विषन् ॥

वैकत्र द्वयोः ॥ २ । २ । ८५ ॥

द्विकर्मसु कृत्प्रत्ययान्तेषु धातुषु कर्मणि षष्ठी । अजाया नेता सुघ्नस्य वा । अजामजाया वा नेता सुघ्नस्य ॥

कर्त्तरि ॥ २ । २ । ८६ ॥

कृदन्तस्य षष्ठी ॥ भवत आसिका । कर्त्तरि किम् ? । शृहे शायिका ॥

## द्विहेतोरस्त्यणकस्य वा ॥ २ । २ । ८७ ॥

कृतः कर्त्तरि पष्ठी ॥ विचित्रा सूत्रस्य कृतिराचार्यस्याचार्येण वा । द्विहेतोरित्येकवचननिर्देशः किम् ?। आश्चर्यमोदनस्य नाम पाकोऽतिथीनां च प्रादुर्भावः । अस्त्यणकस्येति किम् ? । चिकीर्षा मैत्रस्य काव्यानाम् । भेदिका चैत्रस्य काष्ठानाम् ॥

## कृत्यस्य वा ॥ २ । २ । ८८ ॥

कर्त्तरि पष्ठी ॥ त्वया तव वा कार्यः कटः । घ्यण्तव्यानीययक्यप. कृत्या॰ ॥

## नोभयोर्हेतो. ॥ २ । २ । ८९ ॥

कर्तृकर्मणो॰ षष्ठीहेतो॰ कृत्यस्योभयोरेव न षष्ठी ॥ नेतव्या ग्राममजा मैत्रेण ॥

## तृन्नुदन्ताव्ययक्स्वानातृश्शतृङिणकच्खलर्थस्य ॥ २ । २ । ९० ॥

कर्मकर्त्रोर्न षष्ठी ॥ वदिता जनापवादान् । कन्यामलंकरिष्णुः भ्रवाल्लुस्तवत्वम् । कटं कृत्वा। ओदनं भोक्तु व्रजति । तत्वं विद्वान् । कटं चक्राण । मलय पवमान.। ओदनं पचमानः। अधीयस्तत्त्वार्थम् । कटं कुर्वन्। परीषहान् सासहिः । कटं कारको व्रजति । ईषत्कर॰ कटो भवता । सुज्ञान तत्त्व भवता ॥

## क्तयोरसदाधारे ॥ २ । २ । ९१ ॥

कर्मकर्त्रोर्न ॰ केति क्तक्तवत्वोर्ग्रहणम्। कृन. कटो मैत्रेण। ग्रामं गतवान् ... र इति किम् ? । राज्ञा पूजित॰ । इदं सतूनां ...

वा क्लीबे ॥ २ । २ । ९२ ॥

विहितस्य क्तस्य कर्त्तरि षष्ठी ॥मयूरस्य मयूरेण वा नृत्तम् ॥

अकमेरुकस्य ॥ २ । २ । ९३ ॥

कर्मणि न षष्ठी ॥ भोगानभिलाषुकः । अकमेरिति किम् ? । दास्याः कामुकः ॥

एष्यदृणेन ॥ २ । २ । ९४ ॥

कर्मणि षष्ठी न ॥ ग्रामं गमी, आगामी वा । शतं दायी । एष्यदृणेति किम् ? । साधु दायी वित्तस्य ॥

सप्तम्यधिकरणे ॥ २ । २ । ९५ ॥

कटे आस्ते । दिवि देवाः । तिलेषु तैलम् ॥

नवा सुजर्थैः काले ॥ २ । २ । ९६ ॥

युक्तादधिकरणे वर्त्तमानात् सप्तमी ॥ द्विरह्नि अह्नो वा भुङ्क्ते । पञ्चकृत्वो मासे मासस्य वा भुङ्क्ते । सुजर्थैरिति किम् ? । अह्नि भुङ्क्ते ॥

कुशलायुक्तेनासेवायाम् ॥ २ । २ । ९७ ॥

युक्तादाधारवाचिनो वा सप्तमी ॥ कुशलो विद्यायां विद्याया वा । युक्तस्तपसि तपसो वा । आसेवायामिति किम् ? । कुशलश्चित्रे न करोति । आयुक्तो गौः शकटे । आकृष्य युक्त इत्यर्थः ॥

स्वामीश्वराधिपतिदायादसाक्षिप्रतिभूप्रसूतैः ॥ २ । २ । ९८ ॥

युक्ताद्वा सप्तमी ॥ गोषु गवां वा स्वामी ईश्वरः, अधिपतिः, दायादः, साक्षी, प्रतिभूः, प्रसूतो वा ॥

व्याप्ये केनः ॥ २ । २ । ९९ ॥

नित्यं सप्तमी ॥ अधीती व्याकरणे । इष्टी यज्ञे । केन इति किम्? । कृतपूर्वी कटम् ॥

तद्युक्ते हेतौ ॥ २ । २ । १०० ॥

वर्तमानात् सप्तमी ॥

" चर्मणि द्वीपिनं हन्ति दन्तयोर्हन्ति कुञ्जरम् ।
केशेषु चमरीं हन्ति सीम्नि पुष्कलको हतः " ॥ १ ॥

तद्युक्त इति किम् ? । धनेन वसति ॥

अप्रत्यादावसाधुना ॥ २ । २ । १०१ ॥

युक्तात् सप्तमी ॥ असाधुर्मैत्रो मातरि । प्रत्यादिप्रयोगाभाव इति किम् ? । असाधुर्मैत्रो मातरं प्रति परि अनु अभि वा ॥

साधुना ॥ २ । २ । १०२ ॥

अप्रत्यादौ युक्तात् सप्तमी । साधुर्मैत्रो मातरि । अप्रत्यादावित्येव । साधुर्मातरं प्रति परि अनु अभि वा ॥

निपुणेन चार्चायाम् ॥ २ । २ । १०३ ॥

साधुना युक्तादप्रत्यादौ सप्तमी ॥ मातरि निपुणः साधुर्वा । अर्चायामिति किम् ? । निपुणो मैत्रो मातुः । माता एवैनं निपुणं मन्यते । अप्रत्यादावित्येव । निपुणो मैत्रो मातरं प्रति परि अनु अभि वा ॥

स्वेशेऽधिना ॥२ । २ । १०४ ॥

वर्तमानाद्युक्तात्सप्तमी ॥ अधि मगधेषु श्रेणिकः । अधि श्रेणिके मगधाः ॥

उपेनाधिकिनि ॥ २ । २ । १०५ ॥

युक्तात् सप्तमी ॥ उप खार्यां द्रोणः ॥

**यद्भावो भावलक्षणम् ॥ २ । २ । १०६ ॥**

यस्य भावेनान्यो भावो लक्ष्यते तद्वाचिनः सप्तमी ॥ देवार्चनायां क्रियमाणाया गतः, कृतायामागतः ॥

**गते गम्येऽध्वनोऽन्तेनैकार्थ्यं वा ॥ २ । २ । १०७ ॥**

कुतश्चिदवधेर्विवक्षितस्याध्वनोऽवसानमन्तः । यद्भावो भावलक्षणं तस्याध्ववाचिशब्दस्याध्वन एवान्तेनान्तवाचिना सह सामानाधिकरण्यं वा स्यात् तद्विभक्तिस्तस्मात्स्यादित्यर्थः, गते गम्ये ॥ लोकमध्याल्लोकान्तमुपर्यधश्च सप्तरज्जवोऽभ्यस्यन्ति । सप्तसु रज्जुषु वा । गत इति किम् ? । दर्पेषु लुप्तेष्विति वा प्रतीतौ मा भूत् । गम्य इति किम् ? । गतप्रयोगे मा भूत् । अध्वन इति किम् ? । कार्तिक्या आग्रहायणी मासे । अन्तेनेति किम् ? । अद्य नक्षत्रेषु गव्यूतेषु भोजनम् ॥

**षष्ठी वाऽनादरे ॥ २ । २ । १०८ ॥**

यद्भावो भावलक्षणं तद्वृत्ते ॥ रुदतो लोकस्य, रुदति लोके वा प्राव्राजीत् ॥

**सप्तमी चाविभागे निर्धारणे ॥ २ । २ । १०९ ॥**

गम्ये गौणाच्चात्र षष्ठी ॥ जातिगुणक्रियासंज्ञाभिः समुदायादेकदेशस्य बुद्ध्या पृथक्करणं निर्धारणम् । क्षत्रियो नृणां नृषु वा शूरः । कृष्णा गवां गोषु वा बहुक्षीरा । धावन्तो यातां यात्सु वा शीघ्रतमाः । युधिष्ठिरः श्रेष्ठतमः कुरूणां कुरुषु वा । अविभाग इति किम् ? । मैत्रश्चैत्रात्पटुः ॥

**क्रियामध्येऽध्वकाले पञ्चमी च ॥ २ । २ । ११० ॥**

वर्त्तमानान्नाम्नः सप्तमी॥ इहस्थोऽयमिष्वासः क्रोशे क्रोशाद् वा लक्ष्यं विध्यति। अद्य भुक्त्वा मुनिर्द्व्यहे द्व्यहाद्वा भोक्ता॥

अधिकेन भूयसस्ते ॥ २ । २ । १११ ॥

योगे सप्तमीपञ्चम्यौ ॥ अधिको द्रोण खार्यां खार्या वा ॥

तृतीयाल्पीयसः ॥ २ । २ । ११२ ॥

अधिकेन भूयोवाचिना योगे ॥ अधिका खारी द्रोणेन ॥

पृथग्नाना पञ्चमी च ॥ २ । २ । ११३ ॥

युक्तात्तृतीया ॥ पृथग्चैत्रात् चैत्रेण वा । नाना चैत्राच्चैत्रेण वा ॥

ऋते द्वितीया च ॥ २ । २ । ११४ ॥

युक्तात्पञ्चमी ॥ ऋते धर्मं धर्माद् वा कुतः सुखम् ॥

विना ते तृतीया च ॥ २ । २ । ११५ ॥

युक्ताद् द्वितीयापञ्चम्यौ ॥ विना वातं वाताद् वातेन वा ॥

तुल्यार्थैस्तृतीयाषष्ठ्यौ ॥ २ । २ । ११६ ॥

युक्तात् ॥ माता मातुर्वा तुल्यः समो वा । उपमा नास्ति कृष्णस्येत्यादौ उपमादयो न तुल्यार्थाः। गौणादित्यधिकाराद् गौरिव गवय इत्यादौ न ॥

द्वितीयाषष्ठ्यावेनेनानञ्चे ॥ २ । २ । ११७ ॥

युक्तात् ॥ पूर्वेण ग्रामं ग्रामस्य वा । अनञ्चेरिति किम् ? । प्राग्ग्रामात् ॥

हेत्वर्थैस्तृतीयाद्याः ॥ २ । २ । ११८ ॥

समानाधिकरणात् । धनेन हेतुनेत्याद्

दि। एव निमित्तादियोगेऽपि ॥

सर्वादेः सर्वा ॥ २ । २ । ११९ ॥

हेत्वर्थैर्युक्तात् ॥ को हेतुः । क हेतुमित्यादि। तत्समानाधिकरणा-दित्येव। कस्य हेतु' ॥

असत्त्वारादर्थाट्टाङसिङस्यम् ॥ २ । २ । १२० ॥

गौणादिति निवृत्तम् ॥ दूरेण दूरात् दूरे दूर वा, अन्तिकेन अन्तिकात् अन्तिके अन्तिक वा ग्रामस्य ग्रामाद्वा वसति । एवं विप्रकृष्टेन अभ्यासेनेत्यादि । असत्त्व इति किम् ? । दूर पन्था. ॥

जात्याख्यायां नवैकोऽसङ्ख्यो बहुवत् ॥ २ । २ । १२१ ॥

सम्पन्ना यवा । सम्पन्नो यव । जातीति किम् ? । चैत्र' । आख्यायामिति किम् ? । काश्यपप्रतिकृति' काश्यप । असङ्ख्य इति किम् ? । एको व्रीहिः संपन्न सुभिक्ष करोति ॥

अविशेषणे द्वौ चास्मद ॥ २ । २ । १२२ ॥

एकोऽर्थो वा बहुवत् ॥ आवा ब्रूव । वय ब्रूम' । अहं ब्रवीमि । वय ब्रूम. । अविशेषणे किम् ? । आवां गार्ग्यौ ब्रूव' । अह, चैत्रो ब्रवीमि ॥

फल्गुनीप्रोष्ठपदस्य भे ॥ २ । २ । १२३ ॥

वर्तमानस्य द्वौ बहुवद्वा ॥ कदा पूर्वे फल्गुन्यौ । कदा पूर्वा फल्गुन्य । कदा पूर्वे प्रोष्ठपदे । कदा पूर्वा प्रोष्ठपदा' । भ इति किम् ? । फल्गुनीषु जाते फल्गुन्यौ कन्ये ॥

गुरावेकश्च ॥ २ । २ । १२४ ॥

, वर्त्तमानस्य शब्दस्य द्वौ बहुवद्वा ॥ त्वं गुरुः । यूय गुरवः । युवा गुरु। यूयं गुरवः । एष मे पिता । एते मे पितर ॥

इति श्रीतपोगच्छाचार्यविजयदेवसूरिविजयसिंहसूरिपट्टपरम्पराप्रतिष्ठितगीतार्थः,ादिगुणो ,तट्टद्धिचन्द्रापरनामऋद्धिविजयचरणकमलमिलिन्दायमानान्तेवासिसविमशाखीयतपोगच्छाचार्यभट्टारकश्रीविजयनेमिसूरिविरचितायां लघुहेमप्रभायां कारकाणि ॥

---

## ॥ अथ समासप्रकरणम् ॥

---

### समर्थ पदविधि. ॥ ७ । ४ । १२२ ॥

सर्व:॥ सामर्थ्यं व्यपेक्षा एकार्थीभावश्च। परस्पर साकाङ्क्षत्व व्यपेक्षा । भिन्नप्रवृत्तिनिमित्ताना शब्दानामेकार्थोपस्थापकत्वमेकार्थीभावः। पदविधिश्च समासनाम धातुकृत्तद्धितोपपदविभक्तियुष्मदस्मदादेशप्लुतरूप'। धर्मश्रित । पुत्रीयति । कुम्भकार' । औपगवः । नमो देवेभ्य । धर्मस्ते मे स्वम्। अङ्ग कूज २, इदानीं ज्ञास्यसि जाल्म। सविशेषणानां वृत्तिर्न।वृत्तस्य च विशेषणयोगो न। क्वचित्तु विशेषणयोगेऽपि गमकत्वात् समासः । देवदत्तस्य गुरुकुलम् । समर्थ इति किम् ? । पश्य धर्मं श्रितो मैत्रो गुरुकुलमित्यादि। पदोक्तेर्वर्णविधिरसामार्थ्येऽपि । तिष्ठतु दध्याशान त्वं शाकेन । एवं समास–नामधातु–कृत्–तद्धितेषु, वाक्ये व्यपेक्षा, वृत्तावेकार्थीभाव , शेषेषु पुनर्व्यपेक्षैव-सामर्थ्यम् ॥

### नाम नाम्नैकार्थ्ये समासो बहुलम् ॥ ३ । १ । १८ ॥

लक्षणमिदमधिकारश्च ॥ तेन विशेषसंज्ञाऽभावेऽप्यनेन समास' । विस्पष्टं पटु । विस्पष्टपटुः । दारुणाध्यापक । सर्वचर्मीणो र कन्ये इव । ~। नामेति किम् ? । चरन्ति गावो

नाम्नेति किम् ? । चैत्र पचति । बहुलग्रहणात् क्वचिदनाम्नानाम्ना च । मान्यर्के नम । अनुव्यचलत् ॥

ऐकार्थ्ये ॥ ३ । २ । ८ ॥

स्यादेर्लुप् ॥ चित्रगु ॥

सुज्वार्थे सङ्ख्या सङ्ख्येये सङ्ख्यया बहुव्रीहिः ॥ ३ । १ । १९ ॥

ऐकार्थ्ये समासः ॥ सुज्वर्थो वारः । वार्थः संशयो विकल्पो वा ॥

सङ्ख्या समासे ॥ ३ । १ । १६३ ॥

अनुपूर्वं प्राक् । द्विदशाः । द्विशाः । सङ्ख्येति किम् ? । गावो वा दश वा । सङ्ख्येयेति किम् ? । दश वा गावो वा । सङ्ख्येये इति किम् ? । द्विविंशतिर्गवाम् ॥

आसन्नादूराधिकाध्यर्धार्धादिपूरणं द्वितीयाद्यन्यार्थे ॥ ३ । १ । २० ॥

सङ्ख्या नाम्नैकार्थ्ये समासः सङ्ख्येये वाच्ये स च बहुव्रीहिः ॥

प्रथमोक्तं प्राक् ॥ ३ । १ । १४८ ॥

समासप्रकरणे ॥ आसन्नदशाः । अदूरदशाः । अधिकदशाः । अध्यर्धविंशाः । अर्धपञ्चमविंशाः ॥

प्रमाणीसङ्ख्याड्डः ॥ ७ । ३ । १२८ ॥

बहुव्रीहेः समासान्तः ॥ स्त्रीप्रमाणाः । द्विशाः ॥

विंशतेस्तेर्डिति लुक् ॥ ७ । ४ । ६७ ॥

अध्यर्धविंशाः ॥

बहुगणं भेदे ॥ १ । १ । ४० ॥

सङ्ख्यावत्

अव्ययम् ॥ ३ । १ । २१ ॥

सङ्ख्यया ऐकार्थ्ये समस्यते द्वितीयाद्यन्यार्थे सङ्ख्येये वाच्ये स च बहुव्रीहिः । उपदशाः । उपबहवः । उपगणाः ॥

एकार्थं चानेकं च ॥ ३ । १ । २२ ॥

एकमन्यथं च नाम्ना द्वितीयाद्यन्तान्यपदार्थे समस्यते स च बहुव्रीहिः ॥ आरूढवानरो वृक्षः । सुसूक्ष्मजटकेशः । उच्चैर्मुखः । व्यधिकरणत्वादव्ययस्य न स्यादित्यव्ययानुकर्षणार्थश्चकारः ॥

परतः स्त्री पुंवत् स्त्र्येकार्थेऽनूङ् ॥ ३ । २ । ४९ ॥

उत्तरपदे ॥ दर्शनीयभार्यः। विशेष्यवशादिति किम्?। द्रुणीभार्यः। स्त्रीति किम्?। खलपुदृष्टिः। स्त्र्येकार्थ इति किम्?। कल्याणीवस्त्रम्। कल्याणीनेत्राः। कल्याणीमाता। अनूङिति किम्। करभोरूभार्यः ॥

गोश्चान्ते ह्रस्वोऽनशिसमासेयोबहुव्रीहौ ॥२।४।९६॥

गौणस्याक्विपो ङ्याद्यन्तस्य॥ चित्रगु । निष्कौशाम्बिः। अतिखट्व । अतिब्रह्मबन्धुः। गौणस्येत्येव। सुगौ । अक्विप इत्येव। प्रियकुमारी चैत्र. । गोश्चेति किम्?। अतितन्त्रीः । अन्ते इति किम्?। गोकुलम् । कुमारीप्रियः । कन्यापुरम् । अनंशीत्यादि किम्?। अर्धपिप्पली । बहुश्रेयसी ना ॥

नाप्प्रियादौ ॥ ३ । २ । ५३ ॥

स्त्र्येकार्थे उत्तरपदे परे परतः स्त्री पुंवत् ॥ कल्याणीपञ्चमा रात्रय । कल्याणीप्रियः । अप्प्रियादाविति किम्?। कल्या-

तद्धिताककोपान्त्यपूरण्याख्याः ॥ ३ । २ । ५४ ॥

परत स्त्रिय पुंवन्न । मद्रिकाभार्य । कारिकाभार्य । पञ्चमीभार्य । दत्ताभार्य । तद्धिताकेति किम् ? । पाकभार्य ॥

तद्धित स्वरवृद्धिहेतुररक्तविकारे ॥ ३ । २ । ५५ ॥

परत स्त्री पुंवन्न । माथुरीभार्य । तद्धित इति किम् ? । कुम्भकारभार्य । स्वर इति किम् ? । वैयाकरणभार्य । वृद्धिहेतुरिति किम् ? । अर्धमस्यभार्य । अरक्तविकार इति किम् ? । कापायबृहतिक । लौहेप ॥

स्वाङ्गान्ङीर्जातिश्चामानिनि ३ । २ । ५६ ॥

परत स्त्री पुंवन्न । दीर्घकेशीभार्य । कठीभार्यः । शूद्राभार्य । स्वाङ्गात् किम् ? । पटुभार्य । अमानिनीति किम् ? । दीर्घकेशमानिनी ॥

बहुव्रीहे काष्ठे ट ॥ ७ । ३ । १२५ ॥

अङ्गुल्यन्तात् समासान्त । द्व्यङ्गुल काष्ठम् । काष्ठे किम् ? । पञ्चाङ्गुलिर्हस्तः ॥

सक्थ्यक्ष्ण स्वाङ्गे ॥ ७ । ३ । १२६ ॥

एतदन्ताद्बहुव्रीहेट । दीर्घसक्थ । स्वक्षी । स्वाङ्ग इति किम् ? । दीर्घसक्थ्यन ॥

द्वित्रेर्मूर्ध्नो वा ॥ ७ । ३ । १२७ ॥

बहुव्रीहेटः । द्विमूर्ध । द्विमूर्धा । त्रिमूर्ध । त्रिमूर्धा ॥

सुप्रातसुश्वसुदिवशारिकुक्षचतुरस्रैणीपदाजपदप्रोष्ठपदभद्रपदम् ॥ ७ । ३ । १२९ ॥

एते बहुव्रीहयो डान्ता निपात्यन्ते ॥

पूरणीभ्यस्तत्प्राधान्येऽप् ॥ ७ । ३ । १३० ॥

कल्याणीपञ्चमा रात्रयः । तत्प्राधान्य इति किम् ? । कल्याणपञ्चमीकः पक्षः ॥

नञ्सुव्युपत्रेश्चतुर ॥ ७ । ३ । १३१ ॥

बहुव्रीहेरप् समासान्तः । अचतुरः । सुचतुरः । विचतुरः । उपचतुरा । त्रिचतुराः ॥

अन्तर्बहिर्भ्यां लोम्नः ॥ ७ । ३ । १३२ ॥

बहुव्रीहेरप् ॥ अन्तर्लोमः । बहिर्लोम ॥

भान्नेतु ॥ ७ । ३ । १३३ ॥

बहुव्रीहेरप् । मृगनेत्रा निशा॥

नाभेर्नाम्नि ॥ ७ । ३ । १३४ ॥

बहुव्रीहेरप् । पद्मनाभः । नाम्नीति किम् ? । विकसितवारिजनाभि ।

नञ्बहोर्ऋचो माणवचरणे ॥ ७ । ३ । १३५ ॥

बहुव्रीहेरप यथासङ्ख्यम । अनृचो माणवः । बह्वृचश्चरणः । माणवचरणे इति किम् ? । अनृर्क साम । बह्वृर्क सूक्तम । ऋक्पूरित्येव सिद्धे नियमार्थं वचनम् ॥

नञ्सुदुर्भ्यः सक्तिसक्थिहलेर्वा ॥ ७ । ३ । १३६ ॥

बहुव्रीहेरप् । असक्त । असक्तिः । सुसक्तः । सुसक्ति । दुःसक्तः । दुःसक्ति । एव सक्थिहलिभ्याम् ।

प्रजाया अस् ॥ ७ । ३ । १३७ ॥

नञादिभ्यो बहुव्रीहेः ॥ अप्रजाः । सुप्रजाः । दुष्प्रजाः ॥

मेधायाः ॥ ७ । ३ । १३८ ॥

नञादिभ्यश्च बहुव्रीहेरस् । मन्दमेधाः । अल्पमेधाः । अमेधाः । सुमेधाः । दुर्मेधाः ॥

जातेरीय सामान्यवति ॥ ७ । ३ । १३९ ॥

बहुव्रीहेः ॥ ब्राह्मणजातीयः । सामान्याश्रयेऽन्यपदार्थे इति किम् ? । बहुजातिर्ग्रामः ॥

भृतिप्रत्ययान्मासादिक ॥ ७ । ३ । १४० ॥

बहुव्रीहेः । पञ्चकमासिकः । मासात् किम् ? । पञ्चकदिवसकः ॥

द्विपदाद् धर्मादन् ॥ ७ । ३ । १४१ ॥

बहुव्रीहेः । साधुधर्मा । द्विपदादिति किम् ? । परमस्वधर्मः ॥

सुहरिततृणसोमाज्जम्भात् ॥ ७ । ३ । १४२ ॥

बहुव्रीहेरन् । सुजम्भा । हरितजम्भा । तृणजम्भा । सोमजम्भा ॥

दक्षिणेर्मा व्याधयोगे ॥ ७ । ३ । १४३ ॥

बहुव्रीहिर्निपात्यः । ईर्मं वहु व्रणं वा । दक्षिणेर्मा मृगः । व्याधयोग इति किम् ? । दक्षिणेर्मः पशुः ॥

सुपूत्युदुत्सुरभेर्गन्धादिद्गुणे ॥ ७ । ३ । १४४ ॥

बहुव्रीहेः । सुगन्धि, पूतिगन्धि, उद्गन्धि, सुरभिगन्धि द्रव्यम् । गुण इति किम् ? । द्रव्ये सुगन्ध आपणिकः ॥

वागन्तौ ॥ ७ । ३ । १४५ ॥

स्वादिभ्य परो यो गन्धस्तदन्ताद्बहुव्रीहेरित् । सुगन्धि सुगन्धो वा कायः । एवं पूतिगन्धि पूतिगन्धः इत्यादि ॥

वाल्पे ॥ ७ । ३ । १४६ ॥

यो गन्धस्तदन्ताद् बहुव्रीहेरित् । सूपगन्धि सूपगन्धं वा भोजनम् ॥

वोपमानात् ॥ ७ । ३ । १४७ ॥

परो यो गन्धस्तदन्ताद्बहुव्रीहेरित्। उत्पलगन्धि उत्पलगन्धं वा मुखम्।

पात्पादस्याहस्त्यादेः ॥ ७ । ३ । १४८ ॥

उपमानात् परस्य बहुव्रीहौ॥ व्याघ्रपात्। अहस्त्यादेरिति किम्?। हस्तिपादः। अश्वपादः ॥

कुम्भपद्यादि ॥ ७ । ३ । १४९ ॥

कृतपादन्तो ङ्यन्त एव बहुव्रीहिर्निपात्यः। कुम्भपदी। जालपदी ॥

सुसंख्यात् ॥ ७ । ३ । १५० ॥

पादस्य बहुव्रीहौ पात्। सुपात्। द्विपात् ॥

वयसि दन्तस्य दतृ ॥ ७ । ३ । १५१ ॥

सुसंख्याद् बहुव्रीहौ। सुदन्। द्विदन्। स्त्रिया सुदती। षोडन्। वयसि किम्?। सुदन्तः ॥

स्त्रियां नाम्नि ॥ ७ । ३ । १५२ ॥

बहुव्रीहौ दन्तस्य दतृः। अयोदती। स्त्रिया किम्?। वज्रदन्तः ॥

श्यावारोकाद्वा ॥ ७ । ३ । १५३॥

दन्तस्य बहुव्रीहौ दतृर्नाम्नि। श्यावदन्। श्यावदन्तः। अरोकदन्। अरोकदन्तः ॥

वाऽग्रान्तशुद्धशुभ्रवृषवराहाहिमूषिकशिखरात् ॥ ७ । ३ । १५४ ॥

दन्तस्य बहुव्रीहौ दतृः। कुड्मलाग्रदन्। कुड्मलाग्रदन्तः। एवं शुद्धदन्, शुद्धदन्त इत्यादि॥

सम्प्राज्जानोर्ज्ञुः ॥ ७ । ३ । १५५ ॥

बहुव्रीहौ ॥ संज्ञुः । संज्ञ॰ । प्रज्ञुः । प्रज्ञ॰ ॥

वोर्ध्वात् ॥ ७ । ३ । १५६ ॥

जानोर्बहुव्रीहौ ज्ञुर्वा । ऊर्ध्वज्ञुः । ऊर्ध्वज्ञ॰ । ऊर्ध्वजानु ॥

सुहृद्दुर्हृन्मित्रामित्रे ॥ ७ । ३ । १५७ ॥

निपात्यम् । मित्रामित्र इति किम् ? । सुहृदयो मुनिः । दुर्हृदयो व्याध॰ ॥

धनुषो धन्वन् ॥ ७ । ३ । १५८ ॥

बहुव्रीहौ । शार्ङ्गधन्वा ॥

वा नाम्नि ॥ ७ । ३ । १५९ ॥

धनुषो बहुव्रीहौ धन्वन् । पुष्पधन्वा । पुष्पधनु ॥

खरखुरान्नासिकाया नस् ॥ ७ । ३ । १६० ॥

बहुव्रीहौ नाम्नि ।

पूर्वपदस्थान्नाम्न्यग ॥ २ । ३ । ६४ ॥

रषृवर्णात् परस्योत्तरपदस्थस्य नो णः । खरणाः । खुरणाः । नाम्नीति किम् ? । मेषनासिक॰ । अग इति किम् ? । ऋगयनम् ॥

अस्थूलाच्च नस ॥ ७ । ३ । १६१ ॥

खरखुराभ्यां नासिकाया बहुव्रीहौ नाम्नि ॥ द्रुणसः ॥ खरणस । खुरणस॰ । अस्थूलादिति किम् ? । स्थूलनासिकः ॥

उपसर्गात् ॥ ७ । ३ । १६२ ॥

नासिकाया नसो बहुव्रीहौ ॥

नसस्य ॥ २ । ३ । ६५ ॥

पूर्वपदस्थाद्पूर्वर्णात् परस्य नो ण । मर्णसं मुखम् ॥

ने खुरुग्रम् ॥ ७ । ३ । १६३ ॥

नासिकाया बहुव्रीहौ । खुः । विख्र । विग्रः ॥

जायाया जानिः ॥ ७ । ३ । १६४ ॥

बहुव्रीहौ । युवजानिः ॥

व्युद काकुदस्य लुक् ॥ ७ । ३ । १६५ ॥

बहुव्रीहौ । विकाकुत् । उत्काकुत् ॥

पूर्णाद्वा ॥ ७ । ३ । १६६ ॥

बहुव्रीहौ काकुदस्य लुक् । पूर्णकाकुत् । पूर्णकाकुदः ॥

ककुदस्यावस्थायाम् ॥ ७ । ३ । १६७ ॥

बहुव्रीहौ लुक् ॥ पूर्णककुद् युवा । अककुद् बाल. ॥

त्रिककुद्गिरौ ॥ ७ । ३ । १६८ ॥

गिरावर्थे त्रेः परस्य ककुदशब्दस्य ककुभिपात्यः । त्रिककुद्गिरिः ॥

स्त्रियामूधसो न् ॥ ७ । ३ । १६९ ॥

बहुव्रहौ । कुण्डोध्नी गौः ॥

इन कच् ॥ ७ । ३ । १७० ॥

बहुव्रीह स्त्र्यर्थात् । बहुदण्डिका सेना ॥

ऋन्नित्यदित ॥ ७ । ३ । १७१ ॥

बहुनदे कच् । बहुकर्तृक । बहुनदीको देश । नित्येति किम् ? । पृथुश्री २ ॥

बहुव्रीहेः कच् । मिषदधिकः । मियोरस्कः । बहुसर्पिष्कः । अ मधुकः । बहूपानत्कः । अशाल्किः ॥

पुमनडुन्नौपयोलक्ष्म्या एकत्वे ७ । ३ । १७३ ॥

बहुव्रीहेः कच् । अपुस्कः । मियानडुत्कः । अनौकः । अपयस्कः स्थूलक्ष्मीकः । एकत्वे किम् ? । द्विपुमान् २ ॥

नञोऽर्थात् ॥ ७ । ३ । १७४ ॥

बहुव्रीहेः कच् । अनर्थकं वचः ॥

शेषाद्वा ॥ ७ । ३ । १७५ ॥

बहुव्रीहेः कच् । बहुखट्वकः । बहुखट्वः । शेषात् किम् ? । मियपथः

बहोर्डे ॥ ७ । ३ । ७३ ॥

डस्य मासिर्पतस्तत समासान्तो डः कच न स्यात् ॥ उपबह यदा । ड इति किम् ? । प्रियबहुकः ॥

न नाम्नि ॥ ७ । ३ । १७६ ॥

कच् । बहुदेवदत्तो ग्रामः ॥

ईयसो ॥ ७ । ३ । १७७ ॥

बहुव्रीहेः कच् न । बहुश्रेयान् । लिङ्गविशिष्टस्यापि ग्रहण बहुश्रेयसी ॥

ङ्याद्दीदूत के ॥ २ । ४ । १०४ ॥

ह्रस्वः । पट्विका । सोमपकः । लक्ष्मिका । वधुका । इति माते ॥

न कचि ॥ २ । ४ । १०५ ॥

ङ्यादीदूतो ह्रस्वः । बहुकुमारीकः । बहुकीलालपाकः । इत्यादि

नवाप. ॥ २ । ४ । १०६ ॥

कचि ह्रस्वः । प्रियखट्वकः । प्रियखट्वाकः ॥

उष्ट्रमुखादय ॥ ३ । १ । २३ ॥

बहुल बहुव्रीहिसमासा निपात्यन्ते ॥ उष्ट्रस्य मुखमिव मुखमस्य उष्ट्रमुखः । वृषस्कन्ध ॥

सहस्तेन ॥ ३ । १ । २४ ॥

अन्यपदार्थे समस्यते स च बहुव्रीहिः । सकर्मकः ॥

सहात्तुल्ययोगे ॥ ७ । ३ । १७८ ॥

बहुव्रीहेः कच् न ॥ सपुत्रो याति । तुल्ययोग इति किम् ? । सलोमकः ॥

भ्रातु. स्तुतौ ॥ ७ । ३ । १७९ ॥

बहुव्रीहेः कच् न ॥ सुभ्राता ॥

नाडीतन्त्रीभ्यां स्वाङ्गे ॥ ७ । ३ । १८० ॥

बहुव्रीहेः कच् न ॥ बहुनाडि कायः । बहुतन्त्रीर्ग्रीवा । स्वाङ्ग इति किम् ? । बहुनाडीकः स्तम्बः ॥

निष्प्रवाणि ॥ ७ । ३ । १८१ ॥

कजभावो निपात्य । निष्प्रवाणि पट ॥

सुभ्र्वादिभ्य. ॥ ७ । ३ । १८२॥

कच् न ॥ सुभ्रू । वरोरु ॥

दिशो रूढ्यान्तराले ॥ ३ । १ । २५ ॥

नाम रूढ्यैव दिशो वाचिना नाम्नाऽन्यपदार्थे वाच्ये समस्यते स च बहुव्रीहि ॥ दक्षिणपूर्वा दिक् । कथ पश्चिमदक्षिणा, कर्मधारयोऽयम् । सर्वनाम्न. पूर्वनिपात स्यात् । रूढ्येति

किम् ? । ऐन्द्याश्च कौबेर्याश्च यदन्तरालमिति ॥

## विशेषणसर्वादिसङ्ख्यं बहुव्रीहौ ॥ ३ । १ । १५० ॥

प्राक् स्यात् ॥ चित्रगुः । सर्वशुक्लः । द्विकृष्णः ॥

## क्तः ॥ ३ । १ । १५१ ॥

क्तान्तं सर्वं बहुव्रीहौ प्राग् स्यात्। कृतकटः। विशेष्यार्थं वचनम् स्पर्धे परत्वार्थं च । कृतमन्यकटः । केचित्तु सर्वादिभ्यः क्तान्तस्य पूर्वनिपातं नेच्छन्ति । बहुवचनं व्याप्त्यर्थम्, तेन कृतमिय इत्यत्र परेणापि स्पर्धे क्तान्तस्यैव पूर्वनिपातः ॥

## जातिकालसुखादेर्नवा ॥ ३ । १ । १५२ ॥

बहुव्रीहौ क्तान्तं प्राक् स्यात् ॥ कृतकटः । कटकृतः । मासजाता । जातमासा । सुखजाता । जातसुखा । सुखादयो दश ॥

## आहिताग्न्यादिषु ॥ ३ । १ । १५३ ॥

क्तान्तं वा प्राग् बहुव्रीहिषु । आहिताग्निः । अग्न्याहितः । जातदन्तः । दन्तजातः ॥

## प्रहरणात् ॥ ३ । १ । १५४ ॥

क्तान्तं बहुव्रीहौ वा प्राक् ॥ उद्यतासिः । असुद्यतः ॥

## न सप्तमीन्द्वादिभ्यः ॥ ३ । १ । १५५ ॥

प्रहरणाच्च प्राग् बहुव्रीहौ ॥ इन्दुमौलिः । पद्मनाभः । असिपाणिः । बहुलाधिकारात् पाणिवज्रः । बहुवचनं प्रयोगानुसरणार्थम् । एवमुत्तरत्रापि ॥

## गड्वादिभ्यः ॥ ३ । १ । १५६ ॥

बहुव्रीहौ सप्तम्यन्तं वा प्राक् ॥ गडुकण्ठः । कण्ठेगडुः । मध्ये-

गुरुः । गुरुमध्यः ॥

प्रियः ॥ ३ । १ । १५७ ॥

बहुव्रीहौ प्राग्वा ॥ प्रियगडुः । गडुप्रियः ॥

॥ इति बहुव्रीहिः ॥

तत्रादाय मिथस्तेन प्रहृत्येति युद्धेऽव्ययीभावः ॥ ३ । १ । २६ ॥

नाम नाम्ना अन्यपदार्थे समास स्यात् ॥

इज् युद्धे ॥ ७ । ३ । ७४ ॥

यः समासस्तस्मात् समासान्तः ॥

इच्यस्वरे दीर्घ आच्च ॥ ३ । २ । ७२ ॥

उत्तरपदे पूर्वपदस्य ॥ केशाकेशि । दण्डादण्डि । मुष्टीमुष्टि । मुष्टामुष्टि । तत्रेति तेनेति किम् ? । केशांश्च २ गृहीत्वा कृतं युद्धम् । मुसलं च २ प्रहृत्य कृतं युद्धम् । आदायेति प्रहृत्येति किम् ? । केशेषु च २ स्थित्वा, दण्डैश्च २ आगत्य कृतं युद्धं गृहकोकिलाभ्याम् । सरूपेणेति किम् ? । हस्ते च पादे च गृहीत्वा कृत युद्धम् । युद्ध इति किम् ? । हस्ते च २ गृहीत्वा कृत सख्यम् ॥

द्विदण्ड्यादि ॥ ७ । ३ । ७५ ॥

इजन्तः साधुः । द्विदण्डि हन्ति । उभादन्ति ॥

नदीभिर्नाम्नि ॥ ३ । १ । २७ ॥

अन्यपदार्थ नाम समस्यते सोऽव्ययीभावः ॥ बहुवचनात् विशेषाणां स्वरूपस्य च ग्रहणम् ॥

ङेऽपञ्चम्याः ॥ ३ । २ । २ ॥

स्यादे ॥ उन्मत्तगङ्गं देशः । अत इति किम् ? । अधिस्त्रि । अपञ्चम्या इति किम् ? । उपकुम्भात् ॥

## वा तृतीयायाः ॥ ३ । २ । ३ ॥

अतोऽव्ययीभावस्याम् ॥ किं न उपकुम्भेन । उपकुम्भम् । तत्सम्बन्धिन्या इति किम् ? । किं न मियोपकुम्भेन ॥

## सप्तम्या वा ॥ ३ । २ । ४ ॥

अतोऽव्ययीभावस्याम् ॥ उपकुम्भे । उपकुम्भम् । तत्सम्बन्धिन्या इति किम् ? । मियोपकुम्भे ॥

## ऋद्धनदीवंश्यस्य ॥ ३ । २ । ५ ॥

एतदन्तस्याव्ययीभावस्यादन्तस्य सप्तम्या अम् ॥ सुमगधम् । उन्मत्तगङ्गम् । एकविंशतिभारद्वाज वसति । प्रतिपदोक्तस्यैव ग्रहणादिह न । उपगङ्गे ॥

## अनतो लुप् ॥ ३ । २ । ६ ॥

अव्ययीभावस्य स्यादेः ॥ उपवधु । अनत इति किम् ? । उपकुम्भात् । तत्सम्बन्धिविज्ञानादिह न । मियोपवधु ॥

## सख्या समाहारे ॥ ३ । १ । २८ ॥

नदीभिः सहाव्ययीभावः समासः ॥ द्वियमुनम् । पञ्चनदम् । समाहारे किम् ? । एकनदी ॥

## वंश्येन पूर्वार्थे ॥ ३ । १ । २९ ॥

सङ्ख्या समस्यते सोऽव्ययीभावः ॥ विद्यया जन्मना वा एकसन्तानो वंशः । एकमुनि व्याकरणस्य । सप्तकाशि राज्यस्य । विद्यया तद्वतामभेदविवक्षायामेकमुनि व्याकरणम् । पूर्वार्थे इति किम् ? । द्विमुनिकं व्याकरणम् ॥

पारेमध्येऽग्रेन्तः षष्ठ्या वा ॥ ३ । १ । ३० ॥

समासोऽव्ययीभावः ॥ पारेगङ्गम् । मध्येगङ्गम् । अग्रेवणम् । अन्तर्गिरम् । अन्तर्गिरि । पक्षे, गङ्गापारम् । गङ्गामध्यम् । वनाग्रम् । गिर्यन्तः ॥

यावदियत्त्वे ॥ ३ । १ । ३१ ॥

नाम नाम्ना पूर्वपदार्थे समस्यते सोऽव्ययीभावः ॥ यावदित्यनव्ययं चेह गृह्यते । अव्ययमेवेत्यन्ये । यावदमत्रं भोजय । इयत्त्व इति किम् ? । यावद्दत्तं तावद् भुक्तम् ॥

पर्यपाङ्बहिरच्पञ्चम्या ॥ ३ । १ । ३२ ॥

पूर्वपदार्थे वाच्ये समासोऽव्ययीभावः ॥ परित्रिगर्त्तम् । अपत्रिगर्त्तम् । आग्रामम् । बहिर्ग्रामम् । प्राग्ग्रामम् । पञ्चम्येति किम् ? । परि वृक्षं विद्युत् ॥

लक्षणेनाभिप्रत्याभिमुख्ये ॥ ३ । १ । ३३ ॥

पूर्वपदार्थे समस्यते सोऽव्ययीभावः ॥ अभ्यग्नि, प्रत्यग्नि शलभाः पतन्ति । लक्षणेनेति किम् ? । स्रुघ्नं प्रति गतः । पूर्वपदार्थ इत्येव । अभ्यङ्का गावः ॥

दैर्घ्येऽनुः ॥ ३ । १ । ३४ ॥

लक्षणवाचिना पूर्वपदार्थे समासोऽव्ययीभावः ॥ अनुगङ्गं वाराणसी । दैर्घ्य इति किम् ? । वृक्षमनु विद्युत् ॥

समीपे ॥ ३ । १ । ३५ ॥

अनुः समीपवाचिना पूर्वपदार्थे समस्यते सोऽव्ययीभावः ॥ अनुवनमशनिर्गता ॥

[illegible] ॥ ३ । १ । ३६ ॥

अव्ययीभावा निपात्यन्ते यथायोगमन्यस्य पूर्वस्य वार्थे ॥ तिष्ठद्गु कालः। अघोनाभम्। आयतीगवम्। तिष्ठद्ग्वादिराकृतिगणः।

## नित्यं प्रतिनाऽल्पे ॥ ३ । १ । ३७ ॥

नामाव्ययीभावः समासः ॥ शाकप्रति। अल्प इति किम्?। वृक्षं प्रति विद्युत् ॥

## सङ्ख्याक्षशलाकं परिणा द्यूतेऽन्यथावृत्तौ ॥३।१।३८॥

नित्यं समस्यते सोऽव्ययीभावः ॥ एकपरि, अक्षपरि, शलापरि, एकेनाक्षेण शलाकया वा न तथा वृत्तं यथा पूर्वं जये इत्यर्थः। सङ्ख्यादि किम्?। पाशकेन न तथा वृत्तम्। द्यूत इति किम्?। रथस्याक्षेण न तथा वृत्तम् ॥

## विभक्तिसमीपसमृद्धिव्यृद्ध्यर्थाभावात्ययासम्प्रतिपश्चात्क्रमख्यातियुगपत्सदृक्सम्पत्साकल्यान्तेऽव्ययम् ॥ ३ । १ । ३९ ॥

नाम नाम्ना पूर्वपदार्थे वाच्ये नित्यं समस्यते सोऽव्ययीभावः। विभक्तिर्विभक्त्यर्थः कारकम्, अधिस्त्रि। समीपे, उपकुम्भम्। ऋद्धेराधिक्यं समृद्धिः, सुमद्रम्। विगता ऋद्धिर्व्यृद्धिः, दुर्यवनम्। अर्थाभावे, निर्मक्षिकम्। अत्ययोऽतीतत्वम्, अतिवर्षम्। असम्प्रतीति सम्प्रति उपभोगाद्यभावः, अतिकम्बलम्। पश्चादर्थे, अनुरथम्। क्रमे, अनुज्येष्ठम्। ख्यातौ, इतिभद्रबाहु। युगपदर्थे, सचक्रं धेहि। सदृशि, सव्रतम्। सम्पदि, सब्रह्म साधूनाम्। साकल्ये, सतृणमभ्यवहरति। अन्ते, सपिण्डैषणमधीते।

## अकालेऽव्ययीभावे ॥ ३ । २ । १४६ ॥

सहस्य स उत्तरपदे। इति सः। अकाले किम्?। सहपूर्वाह्णम् ॥

योग्यतावीप्सार्थानतिवृत्तिसादृश्ये ॥ ३ । १ । ४० ॥

अव्ययं नाम्ना सह पूर्वपदार्थे नित्यं समस्यते सोऽव्ययीभावः । अनुरूपं चेष्टते । प्रत्यर्थम् । वीप्सायां द्वितीयाविधानाद्वाक्यमपि । अर्थमर्थं प्रति । यथाशक्ति । सशीलमनयोः ॥

यथाऽथा ॥ ३ । १ । ४१ ॥

नाम नाम्ना पूर्वपदार्थे नित्यं समस्यते सोऽव्ययीभावः । यथारूपं चेष्टते । यथावृद्धमर्चय । यथासूत्रमधीष्व । अथा इति किम् । यथा चैत्रस्तथा मैत्रः ॥

प्रतिपरोऽनोरव्ययीभावात् ॥ ७ । ३ । ८७ ॥

अक्ष्णः समासान्तोऽत् । प्रत्यक्षम् । परोक्षम् । अन्वक्षम् ॥

अनः ॥ ७ । ३ । ८८ ॥

अव्ययीभावादत् ॥

नोऽपदस्य तद्धिते ॥ ७ । ४ । ६१ ॥

अन्त्यस्वरादेर्लुक् । उपतक्षम् ॥

नपुंसकाद्वा ॥ ७ । ३ । ८९ ॥

अनोऽव्ययीभावादत् ॥ उपचर्मम् । उपचर्म ॥

गिरिनदीपौर्णमास्याग्रहायण्यपञ्चमवर्ग्याद्वा ॥ ७ । ३ । ९० ॥

अव्ययीभावादत् । अन्तर्गिरम् । अन्तर्गिरि । उपनदम् । उपनदि । उपपौर्णमासम् । उपपौर्णमासि । उपाग्रहायणम् । उपाग्रहायणि । उपस्रुचम् । उपस्रुक् ॥

सङ्ख्याया [illegible] याम् ॥ ७ । ३ । ९१ ॥

सङ्ख्यादेर्नदीगोदावर्यन्तादव्ययीभावादत् ॥ पञ्चनदम् । द्विगोदावरम् ॥

शरदादे. ॥ ७ । ३ । ९२ ॥

अव्ययीभावादत् ॥ उपशरदम् । प्रतित्यदम् ॥

जराया जरस् च ॥ ७ । ३ । ९३ ॥

अव्ययीभावादत् ॥ उपजरसम् ॥

सरजसोपशुनानुगवम् ॥ ७ । ३ । ९४ ॥

एतेऽव्ययीभावा अदन्ता निपात्या' ॥ सरजस भुङ्क्ते । उपशुनमास्ते । अनुगवमन' ॥

॥ इत्यव्ययीभाव ॥

ऊर्याद्यनुकरणच्विडाचश्च गति ॥ ३ । १ । २ ॥

उपसर्गा धातो सम्बन्धिनस्ते च प्राग्धातो ॥ एवमुत्तरेषु । ऊरीकृत्य । उररीकृत्य । खाट्कृत्य । शुक्लीकृत्य । पटपटाकृत्य । प्रकृत्य ॥

कारिका स्थित्यादौ ॥ ३ । १ । ३ ॥

गतिः ॥ स्थितिर्मर्यादा वृत्तिर्वा । कारिकाकृत्य ॥

भूषादरक्षेपेऽलसदसत् ॥ ३ । १ । ४ ॥

गतिसज्ञम् ॥ अलंकृत्य । सत्कृत्य । भूषादिष्विति किम् ? । अलंकृत्वा ॥

अग्रहानुपदेशेऽन्तरद ॥ ३ । १ । ५ ॥

यथासङ्ख्य गति ॥ अन्तर्हत्य । अद कृत्य । अग्रहत्यादि किम् ? । अन्तर्हत्वा मूषिका श्येनो गत' । अदःकृत्वा गत इति

परस्य कथयति ।

कणेमनस्तृप्तौ ॥ ३ । १ । ६ ॥

गम्याया गतिः । कणेहत्य, मनोहत्य पयः पिबति । तृप्ताविति किम् ? । तण्डुलावयवे कणे हत्वा ॥

पुरोऽस्तमव्ययम् ॥ ३ । १ । ७ ॥

गति ॥ पुरस्कृत्य । अस्तगत्य । अव्यय किम् ? । पुरःकृत्वा। नगरीरित्यर्थ ॥

गत्यर्थवदोऽच्छ ॥ ३ । १ । ८ ॥

गति ॥ अच्छगत्य । अच्छोद्य ॥

तिरोऽन्तर्धौ ॥ ३ । १ । ९ ॥

गति । तिरोभूय ॥

कृगो नवा ॥ ३ । १ । १० ॥

तिरोऽन्तर्धौ गति ॥ तिरस्कृत्य । तिरःकृत्य । पक्षे तिरःकृत्वा ॥

मध्येपदेनिवचनेमनस्युरस्यनत्याधाने ॥३ । १ । ११ ॥

एते कृगो योगे गतयो वा स्यु ॥ मध्येकृत्य। मध्येकृत्वा। पदेकृत्य। पदेकृत्वा। निवचनेकृत्य। निवचनेकृत्वा। मनसिकृत्य। मनसिकृत्वा। उरसिकृत्य। उरसिकृत्वा ॥

उपाजेऽन्वाजे ॥ ३ । १ । १२ ॥

एतौ दुर्बलस्य भग्नस्य वा बलाधानार्थौ कृगो योगे गती वा ॥ उपाजेकृत्य । उपाजेकृत्वा । अन्वाजेकृत्य । अन्वाजेकृत्वा ॥

स्वाम्येऽधि ॥ ३ । १ । १३ ॥

कृग्योगे वा ... ग्रामे अधिकृत्य। अधिकृत्वा वा गत॰

स्वाम्ये इति किम् । ग्राममधि कृत्वा, उद्दिश्येत्यर्थः ॥

साक्षादादिश्च्व्यर्थे ॥ ३ । १ । १४ ॥

कृग्योगे गतिर्वा ॥ साक्षात्कृत्य । साक्षात्कृत्वा । मिथ्याकृत्य । मिथ्याकृत्वा ।

नित्यं हस्तेपाणावुद्वाहे ॥ ३ । १ । १५ ॥

एतौ कृग्योगे गती ॥ हस्तेकृत्य । पाणौकृत्य । उद्वाह इति किम्? । हस्ते कृत्वा कार्षापणं गतः ॥

प्राध्वं बन्धे ॥ ३ । १ । १६ ॥

कृग्योगे गतिः ॥ प्राध्वंकृत्य । बन्धे किम्? । प्राध्वं कृत्वा शकटं गतः ॥

जीविकोपनिषदावौपम्ये ॥ ३ । १ । १७ ॥

कृग्योगे गती ॥ जीविकाकृत्य । उपनिषत्कृत्य ॥

गतिक्वन्यस्तत्पुरुषः ॥ ३ । १ । ४२ ॥

नाम्ना सह नित्यं समासः । ऊरीकृत्य । कुब्राह्मणः । बहुव्रीह्यादिलक्षणरहित इति किम्? । कुपुरुषः ॥

दुर्निन्दाकृच्छ्रे ॥ ३ । १ । ४३ ॥

नाम्ना सह नित्यं समासस्तत्पुरुषः । दुष्पुरुषः । दुष्कृतम् ॥

सु पूजायाम् ॥ ३ । १ । ४४ ॥

नाम्ना नित्यं समासस्तत्पुरुषः । सुराजा ॥

अतिरतिक्रमे च ॥ ३ । १ । ४५ ॥

पूजायां नाम्ना नित्यं समासस्तत्पुरुषः । अतिस्तुत्य । अतिराजा ॥

[illegible] आङल्पे ॥ ३ । १ । ४६ ॥

नाम्ना सह नित्यं समासस्तत्पुरुषः । आकडारः ॥

**प्रात्यवपरिनिरादयो गतक्रान्तक्रुष्टग्लानक्रान्ताद्यर्थाः प्रथमाद्यन्तैः ॥ ३ । १ । ४७ ॥**

प्राचार्यः । समर्थः । अतिखट्वः । उद्वेलः । अवकोकिलः । परिवीरुत् । पर्यध्ययनः । उत्सङ्ग्रामः । निष्कौशाम्बिः । अपशाखः । बाहुलकात् षष्ठीसप्तम्यन्तेनापि । अन्तर्गार्ग्यं । मध्येसमम् । गतार्थाः इति किम् ? । वृक्षं परि विद्युत् । अन्य इत्येव । प्राचार्यको देशः । बहुवचनमाकृतिगणार्थम् । एवमुत्तरत्र ॥

**अव्ययं प्रवृद्धादिभिः ॥ ३ । १ । ४८ ॥**

नित्यं समासस्तत्पुरुषः । पुनःप्रवृद्धम् । अन्तर्भूतः ॥

**इस्युक्तं कृता ॥ ३ । १ । ४९ ॥**

कृत्प्रत्ययविधायके सूत्रे नाम्ना नित्यं समासस्तत्पुरुषः । कुम्भकारः । इह च गतिकारकङस्युक्तानां विभक्त्यन्तानामेव कृदन्तैर्विभक्त्युत्पत्तेः प्रागेव समास इष्यते । तेन षष्ठीत्यादिसिद्धिः । ङस्युक्तमिति किम् ? । अलंकृत्वा ॥

**तृतीयोक्तं वा ॥ ३ । १ । ५० ॥**

दंशेस्तृतीयया इत्यारभ्य यत्तत्कृता समासस्तत्पुरुषः । मूलकोपदंशम्, मूलकेनोपदंशं भुङ्क्ते ॥

**नञ् ॥ ३ । १ । ५१ ॥**

नाम्ना समासस्तत्पुरुषः । असः । असूर्यम्पश्या राजदाराः ॥

**पूर्वापराधरोत्तरमभिन्नेनांशिना ॥ ३ । १ । ५२ ॥**

अंशवाचि समस्यते स तत्पुरुषः ॥ पूर्वकायः । अपरकायः । अधरकायः । [illegible] अभिन्नेनेति किम् ? । पूर्वं [illegible]

वयस्त । अंशिनेति किम् ? । पूर्वं नामेः कायस्य ॥

## सायाह्नादय ॥ ३ । १ । ५३ ॥

अंशितत्पुरुषा साघरः । सायाह्न । मध्यंदिनम् । बहुवचनमाकृतिगणार्थम् ॥

## समेंऽशेऽर्धं नवा ॥ ३ । १ । ५४ ॥

अंशिनाऽभिन्नेन समासस्तत्पुरुष । अर्धपिप्पली । पिप्पल्यर्धम् । समेंऽश इति किम् ? । ग्रामार्धं ॥

## जरत्यादिभि ॥ ३ । १ । ५५ ॥

अंशिभिरभिन्नैरर्धो वा समासस्तत्पुरुष । अर्धजरती । जरत्यर्धं । अर्धोक्तम् । उक्तार्धम् ॥

## द्वित्रिचतुष्पूरणाग्रादय ॥ ३ । १ । ५६ ॥

अंशवाचिनोऽभिन्नेनांशिना वा समासस्तत्पुरुष । द्वितीयभिक्षा । भिक्षाद्वितीयम् । एव तृतीयभिक्षा, तुरीयभिक्षा, चतुर्थभिक्षेत्यादि । अग्रहस्त । हस्ताग्रम् । तलपाद । पादतलम् ॥

## कालो द्विगौ च मेयै. ॥ ३ । १ । ५७ ॥

समस्यते स तत्पुरुष । मासजात । द्व्यहसुप्त । काल इति किम् ? । द्रोणो धान्यस्य ॥

## स्वयसामी क्तेन ॥ ३ । १ । ५८ ॥

समासस्तत्पुरुष, । स्वयधौतम् । सामिकृतम् । क्तेनेति किम् ? । स्वय कृत्वा ॥

## द्वितीया खट्वा क्षेपे ॥ ३ । १ । ५९ ॥

क्तान्तेन सह समासस्तत्पुरुष । खट्वारूढो जाल्म । नित्यस-

मासोऽयम्, वाक्येन सेपानवगमात्। सेपे किम् ?। खट्वामारूढ उपाध्यायोऽध्यापयति ॥

कालः ॥ ३ । १ । ६० ॥

द्वितीयान्त क्तान्तेन समासस्तत्पुरुष । रात्र्यारूढाः । अहरतिसृताः ॥

व्याप्तौ ॥ ३ । १ । ६१ ॥

द्वितीयान्तं कालवाचि व्यापकेन समासस्तत्पुरुष.। मुहूर्तसुखम्। क्षणपातः। दिनगुडः। व्याप्ताविति किम् ?। मास पूरको याति॥

श्रितादिभिः ॥ ३ । १ । ६२ ॥

द्वितीयान्तं समासस्तत्पुरुषः । धर्मश्रित' । शिवगतः ॥

प्राप्तापन्नौ तयाच ॥ ३ । १ । ६३ ॥

प्रथमान्तावेतौ द्वितीयान्तेन समासस्तत्पुरुषस्तद्योगे चानयोरत्। प्राप्तजीविका । आपन्नजीविका ॥

ईषद्गुणवचनै. ॥ ३ । १ । ६४ ॥

समासस्तत्पुरुष' । ये गुणे वर्तित्वा तद्योगाद्गुणिनि वर्तन्ते ते गुणवचनाः । ईषत्पिङ्गल' । ईषद्रक्तः । गुणवचनैरिति किम् ? । ईषद्गार्ग्य. ॥

तृतीया तत्कृतै ॥ ३ । १ । ६५ ॥

गुणवचनैः समासस्तत्पुरुषः । शङ्कुलाखण्ड. । मदपटु' । तृतीयार्थकृतैरिति किम् ? । अक्ष्णा काण. । गुणवचनैरित्येव । दध्ना पटु । पाटवमित्यर्थ' ॥

[illegible] ३ । १ । ६६ ॥

तृतीयान्तं [illegible]समासस्तत्पुरुषः । अर्धचतस्रो मात्रा ।

चत्सेति किम्‌ ? । अर्धेन चत्वारो द्रोणा ॥

## ऊनार्थपूर्वाद्यैः ॥ ३ । १ । ६७ ॥

तृतीयान्तं समासस्तत्पुरुषः । माषोनम्‌ । माषविकलम्‌ । मासपूर्वः । मासावरः । आकृतिगणत्वाद्‌ धान्यार्थ इत्यादीना सिद्धिः ॥

## कारकं कृता ॥ ३ । १ । ६८ ॥

तृतीयान्तं समासस्तत्पुरुषः । आत्मकृतम्‌ । नखनिर्भिन्नः । बहुलाधिकारात्‌ स्तुतिनिन्दार्थतायां प्रायः कृद्भिः सह समासः । काकपेया नदी । बाष्पच्छेद्यानि तृणानि ॥

## नविंशत्यादिनैकोऽच्चान्तः ॥ ३ । १ । ६९ ॥

तृतीयान्तस्समासस्तत्पुरुषस्तत्सन्नियोगे एकस्य । एकान्नविंशति । एकादूनविंशति । एकान्नत्रिंशत्‌ । एकादूनत्रिंशत्‌ ॥

## चतुर्थी प्रकृत्या ॥ ३ । १ । ७० ॥

विकारवाचि समासस्तत्पुरुषः । यूपदारु । परिणामिकारणेनेति किम्‌ ? । रन्धनाय स्थाली ॥

## हितादिभिः ॥ ३ । १ । ७१ ॥

चतुर्थ्यन्तं समासस्तत्पुरुषः । गोहितम्‌ । गोसुखम्‌ ॥

## तदर्थार्थेन ॥ ३ । १ । ७२ ॥

चतुर्थ्यन्तं समासस्तत्पुरुषः । पित्रर्थं पयः । आतुरार्था यवागूः । ऽर्थो वाच्यवदिति वाच्यलिङ्गता । चतुर्थ्यन्तार्थार्थेनेति किम्‌ ? । पित्रेऽर्थः ॥

## पञ्चमी भयाद्यैः ॥ ३ । १ । ७३ ॥

समासस्तत्पुरुषः । वृकभयम्‌ । वृकभीतः । बहुलाधिकारादिह न ।

मासादात् पतित. ॥

## क्तेनासत्त्वे ॥ ३ । १ । ७४ ॥

वर्तमाना या पञ्चमी तदन्तं समासस्तत्पुरुषः । स्तोकान्मुक्तः । अल्पान्मुक्तः । असत्त्वे इति किम् ? । स्तोकाद्बद्धः ॥

## परःशतादि. ॥ ३ । १ । ७५ ॥

पञ्चमीतत्पुरुषः साधु. । परःशता । परःसहस्राः ॥

## षष्ठ्ययत्नाच्छेषे ॥ ३ । १ । ७६ ॥

नाम्ना समासस्तत्पुरुषः । राजपुरुषः । जिनभद्रगणे क्षमाश्रमणस्य भाष्यमित्यादौ सापेक्षत्वान्न । देवदत्तस्य गुरुकुलमित्यादौ सापेक्षत्वेऽपि गमकत्वात् स्यात्। न चेत्स शेषो 'नाथः' इत्यादेर्यत्नादिति किम्? । सर्पिषो नाथितम् । शेष इति किम् ? । रुदतः प्रव्रजितः ॥

## कृति ॥ ३ । १ । ७७ ॥

कर्मणि कृतः कर्तरि इति च या कृन्निमित्ता षष्ठी तदन्त, नाम्ना समासस्तत्पुरुष । सर्पिर्ज्ञानम् । गणधरोक्ति ॥

## याजकादिभि. ॥ ३ । १ । ७८ ॥

षष्ठ्यन्त समासस्तत्पुरुषः । ब्राह्मणयाजकः । गुरुपूजक ॥

## पत्तिरथौ गणकेन ॥ ३ । १ । ७९ ॥

षष्ठ्यन्तौ समासस्तत्पुरुषः । पत्तिगणक । रथगणकः । पत्तिरथाविति किम ? । धनस्य गणकः ॥

## सर्वपश्चादादय. ॥ ३ । १ । ८० ॥

षष्ठीतत्पुरुषाः साधव । सर्वपश्चात्। सर्वचिरम् ॥

## अकेन क्रीडाऽऽजीवे ॥ ३ । १ । ८१ ॥

चतस्रेति किम् ? । अर्धेन चत्वारो द्रोणा ॥

## ऊनार्थपूर्वाद्यै ॥ ३ । १ । ६७ ॥

तृतीयान्त समासस्तत्पुरुष । माषोनम् । माषविकलम् । मासपूर्वः । मासावरः । आकृतिगणत्वाद् धान्यार्थ इत्यादीना सिद्धिः ॥

## कारक कृता ॥ ३ । १ । ६८ ॥

तृतीयान्त समासस्तत्पुरुष । आत्मकृतम् । नखनिर्भिन्न. । बहुलाधिकारात् स्तुतिनिन्दार्थताया प्राय कृत्यै. सह समासः । काकपेया नदी । बाष्पच्छेद्यानि तृणानि ॥

## नविंशत्यादिनैकोच्चान्त ॥ ३ । १ । ६९ ॥

तृतीयान्तस्समासस्तत्पुरुषस्तत्सन्नियोगे एकस्य । एकान्नविंशति.। एकादूनविंशति । एकान्नत्रिंशत् । एकादूनत्रिंशत् ॥

## चतुर्थी प्रकृत्या ॥ ३ । १ । ७० ॥

विकारवाचि समासस्तत्पुरुष । यूपदारु । परिणामिकारणेनेति किम् ? । रन्धनाय स्थाली ॥

## हितादिभि ॥ ३ । १ । ७१ ॥

चतुर्थ्यन्त समासस्तत्पुरुष । गोहितम् । गोसुखम् ॥

## तदर्थार्थेन ॥ ३ । १ । ७२ ॥

चतुर्थ्यन्त समासस्तत्पुरुष । पित्रर्थं पय. । आतुरार्था यवागू । केऽर्थो वाच्यवदिति वाच्यलिङ्गता । चतुर्थ्यन्तार्थार्थेनेति किम् ? । पित्रेऽर्थं ॥

## पञ्चमी भयाद्यै. ॥ ३ । १ । ७३ ॥

समासस्तत्पुरुष । वृकभयम् । वृकभीतः । बहुलाधिकारादिह न ।

समासस्तत्पुरुषः । पानशौण्डः । अक्षधूर्तः ॥

## सिंहाद्यैः पूजायाम् ॥ ३ । १ । ८९ ॥

सप्तम्यन्तं समासस्तत्पुरुषः । समरसिंहः । भूमिवासवः ॥

## काकाद्यैः क्षेपे ॥ ३ । १ । ९० ॥

सप्तम्यन्तं समासस्तत्पुरुषः । तीर्थकाकः । तीर्थश्वा । क्षेपे किम् ? । तीर्थे काकस्तिष्ठति ॥

## पात्रेसमितेत्यादयः ॥ ३ । १ । ९१ ॥

क्षेपे निपात्याः । पात्रेसमिताः । गेहेशूरः । इतिशब्दः समासान्तरनिवृत्त्यर्थः ॥

## क्तेन ॥ ३ । १ । ९२ ॥

सप्तम्यन्तं समासस्तत्पुरुषः क्षेपे ॥ भस्मनिहुतम् । अवतप्तेनकुलस्थितम् ॥

## तत्राहोरात्रांशम् ॥ ३ । १ । ९३ ॥

सप्तम्यन्तं क्तान्तेन समासस्तत्पुरुषः ॥ तत्रकृतम् । पूर्वाह्णकृतम् । पूर्वरात्रकृतम् । तत्राहोरात्रांशमिति किम् ? । घटे कृतम् । अहोरात्रग्रहणं किम् ? । शुक्लपक्षे कृतम् । अंशग्रहणं किम् ? । अह्नि भुक्तम् ॥

## नाम्नि ॥ ३ । १ । ९४ ॥

सप्तम्यन्तं नाम्ना समासस्तत्पुरुषः । अरण्येतिलकाः ॥

## कृत्येनावश्यके ॥ ३ । १ । ९५ ॥

सप्तम्यन्तं समासस्तत्पुरुषः । मासदेयम् । कृदिति किम् ? । मासे पित्र्यम् ॥

## विशेषणं विशेष्येणैकार्थं कर्मधारयश्च ॥ ३ । १ । ९६ ॥

षष्ठ्यन्तं गम्ये समासस्तत्पुषः । उद्दालकपुष्पभञ्जिका । नखलेखकः । क्रीडाऽऽजीवे इति किम् ? । पयसः पायकः ॥

## न कर्त्तरि ॥ ३ । १ । ८२ ॥

या षष्ठी तदन्तमकान्तेन समस्यते । तव शायिका । कर्त्तरीति किम् ? । इक्षुभक्षिका ॥

## कर्मजा तृचा च ॥ ३ । १ । ८३ ॥

षष्ठी कर्तृविहिताकान्तेन न समस्यते । भक्तस्य भोजकः । अपां स्रष्टा । कर्मजेति किम् ? । गुणो गुणिविशेषकः । सम्बन्धेऽत्र षष्ठी । कर्त्तरीत्येन । पय पायिका ॥

## तृतीयायाम् ॥ ३ । १ । ८४ ॥

कर्त्तरि सत्या कर्मजा षष्ठी न समस्यते । साध्विदं शब्दानामनुशासनमाचार्येण । तृतीयायामिति किम् ? । साध्विद शब्दानुशासनमाचार्यस्य ॥

## तृप्तार्थपूरणाव्ययातृश्शत्रानशा ॥ ३ । १ । ८५ ॥

षष्ठ्यन्त न समस्यते । फलाना तृप्त । तीर्थकृता षोडश. । राज्ञः साक्षात् । रामस्य द्विषन् । चैत्रस्य पचन् । मैत्रस्य पचमान ॥

## ज्ञानेच्छार्चार्थाधारक्तेन ॥ ३ । १ । ८६ ॥

षष्ठ्यन्तं न समस्यते ॥ राज्ञा ज्ञात , इष्ट , पूजितः । इदमेषां यातम् । इदमेषां भुक्तम् ॥

## अस्वस्थगुणै ॥ ३ । १ । ८७ ॥

षष्ठ्यन्त न समस्यते । पटस्य शुक्ल. । गुडस्य मधुरः । अस्वस्थगुणैरिति किम् ? । घटवर्णः । चन्दनगन्ध ॥

## सप्तमी शौण्डाद्यै ॥ ३ । १ । ८८ ॥

एकार्थमुपमानवाचिभिः समासस्तत्पुरुषः कर्मधारयश्च स्यात् ॥ पुरुषव्याघ्रः । श्वसिंही । साम्यानुक्ताविति किम् ? । पुरुषव्याघ्रः शूर इति माभूत् ॥

## पूर्वापरप्रथमचरमजघन्यसमानमध्यममध्यमवीरम् ॥ ३ । १ । १०३ ॥

एकार्थं नाम्ना समासस्तत्पुरुषः कर्मधारयश्च । पूर्वपुरुषः । अपरपुरुष इत्यादि ॥

## वोत्तरपदेऽर्द्धे ॥ ७ । २ । १२५ ॥

अपरस्य केवलस्य दिक्पूर्वपदस्य च पश्च ॥ पश्चार्द्धम् । अपरार्द्धम् । दक्षिणपश्चार्द्धं ॥

## श्रेण्यादि कृताद्यैश्च्व्यर्थे ॥ ३ । १ । १०४ ॥

एकार्थं गम्ये समासस्तत्पुरुषः कर्मधारयश्च ॥ श्रेणिकृताः । ऊककृता. । च्व्यर्थे इति किम् ? । श्रेणयः कृताः ॥

## क्त नञादिभिन्नै ॥ ३ । १ । १०५ ॥

एकार्थं समासस्तत्पुरुषः कर्मधारयश्च । कृताकृतम् । अशितानशितम् । पीतावपीतम् । क्तमिति किम् ? । कर्त्तव्यमकर्त्तव्यं च । नञादिभिन्नैरिति किम् ? । कृत मकृतम ॥

## सेट् नानिटा ॥ ३ । १ । १०६ ॥

क्तान्त नञादिभिन्नेन न समस्यते । पूर्वापवाद । क्लिशितमक्लिष्टम् । शितमशातम् । सेडिति किम् ? । कृताकृतम् । अनिटेति किम् ? । अशितानशितम् ॥

## सन्महत्परमोत्तमोत्कृष्ट पूजायाम् ॥ ३ । १ । १०७ ॥

पूज्यवचनै समासस्तत्पुरुषः कर्मधारयश्च । सत्पुरुषः । महापुरुष ।

समासस्तत्पुरुषः । नीलोत्पलम् । खञ्जकुण्टः । कुण्टखञ्जः । एकार्थमिति किम् ? । वृद्धस्योक्षा वृद्धोक्षा ॥

पूर्वकालैकसर्वजरत्पुराणनवकेवलम् ॥ ३ । १ । ९७ ॥

परेण नाम्ना समासस्तत्पुरुषः कर्मधारयश्च ॥ स्नातानुलिप्तः । एकशाटी । सर्वान्नम् । जरद्दलिन । पुराणवैयाकरण. । नवोक्ति । केवलज्ञानम् । एकार्थमित्येव । स्नात्वानुलिप्तः ॥

दिगधिक सञ्ज्ञातद्धितोत्तरपदे ॥ ३ । १ । ९८ ॥

नाम्ना समासस्तत्पुरुष. कर्मधारयश्च । दक्षिणकोशला. । पूर्वेषुकामशमी । दाक्षिणशाल्व । आधिकषाष्टिकः । उत्तरगवधन । अधिकगवप्रिय ॥

सङ्ख्या समाहारे च द्विगुश्चानाम्न्ययम् ॥३।१।९९॥

परेण नाम्ना समासस्तत्पुरुष. कर्मधारयश्च सञ्ज्ञातद्धितयोर्विषये उत्तरपदे च परे । पञ्चाम्रा । सप्तर्षय । द्वैमातुर । अध्यर्धकंस । पञ्चगवधन । पञ्चनावप्रिय. । पञ्चराजी । समाहारे चेति किम् ? । अष्टौ प्रवचनमातर । अनाम्नीति किम् ? । पाञ्चर्षय ॥

निन्द्य कुत्सनैरपापाद्यै ॥ ३ । १ । १०० ॥

समासस्तत्पुरुष कर्मधारयश्च । वैयाकरणखसूचि । मीमांसकदुर्दुरूढ । निन्द्यमिति किम् ? । वैयाकरणभीरु । अपापाद्यैरिति किम् ? । पापवैयाकरण । हतविधि ॥

उपमानं सामान्यै ॥ ३ । १ । १०१ ॥

एकार्थं समासस्तत्पुरुष कर्मधारयश्च स्यात् । शस्त्रीश्यामा । मृगचपला । उपमानमिति किम् ? । देवदत्ता श्यामा ॥

उपमेयं व्याघ्राद्यैः साम्यानुक्तौ ॥ ३ । १ । १०२ ॥

कृत्यतुल्याख्यमजात्या ॥ ३ । १ । ११४ ॥

समासस्तत्पुरुषः कर्मधारयश्च । भोज्योष्णम् । स्तुल्यणुङ् । तु-ल्यसन् । सदृशमहान् । अजात्येति किम् ? । भोज्य ओदनः ॥

कुमार श्रमणादिना ॥ ३ । १ । ११५ ॥

समासस्तत्पुरुषः कर्मधारयश्च । कुमारश्रमणा । कुमारप्रव्रजिता ॥

मयूरव्यंसकेत्यादयः ॥ ३ । १ । ११६ ॥

एते तत्पुरुषसमासा निपात्यन्ते । मयूरव्यंसकः । कम्बोजमुण्डः । एहीडादयोऽन्यपदार्थे । एहीडं कर्म । आख्यातमाख्यातेन सातत्ये । अश्नीतपिबता । हन्त स्वकर्मणा बहुलमाभीक्ष्ण्ये कर्त्तरि समासाभि-धेये । कुरुकटो वक्ता । गतप्रत्यागतादयः । गतप्रत्यागतम् । क्रयक्र-यिका । शाकपार्थिवादयः । शाकपार्थिवः । दध्योदनः । गुडधानाः । त्रिभागः । सर्वश्वेतः ॥

राजदन्तादिषु ॥ ३ । १ । १४९ ॥

अप्राग्प्रनिपात प्राक् स्यात् । राजदन्तः । लिप्तावासितम् । जम्पती । दम्पती । जायापती । गणपाठाज्जायाशब्दस्य जम्भावो दम्भावश्च वा निपात्यते ॥

कडारादयः कर्मधारये ॥ ३ । १ । १५८ ॥

प्राग्वा स्युः ॥ कडारजैमिनिः । जैमिनिकडारः । काणद्रोणः । द्रोणकाणः ॥

जातमहद्वृद्धादुक्ष्ण कर्मधारयात् ॥ ७ । ३ । ९५ ॥

अत् समासान्तः । जातोक्षः । महोक्षः । वृद्धोक्षः । कर्मधारया-दिति किम् ? । जातस्योक्षा जातोक्षा ॥

स्त्रियाः पुंसो द्वन्द्वाच्च ॥ ७ । ३ । ९६ ॥

परमपुरुषः। उत्तमपुरुषः। उत्कृष्टपुरुषः। पूजायामिति किम्?। सन् घट अस्तीत्यर्थः॥

वृन्दारकनागकुञ्जरैः ॥ ३ । १ । १०८ ॥

पूजाया पूज्यवाच्येकार्थैः समासस्तत्पुरुषः कर्मधारयश्च। गोवृन्दारकः। गोनागः। गोकुञ्जरः। पूजायामिति किम्?। सुसीमो नागः।

कतरकतमौ जातिप्रश्ने ॥ ३ । १ । १०९ ॥

जात्यर्थेन समासस्तत्पुरुषः कर्मधारयश्च। कतरकठः। कतमगार्ग्यः।

किं क्षेपे ॥ ३ । १ । ११० ॥

कुत्स्यवाचिना समासस्तत्पुरुषः कर्मधारयश्च। किंराजा। किंगौः।

पोटायुवतिस्तोककतिपयगृष्टिधेनुवशावेहद्बष्कयणीप्रवक्तृश्रोत्रियाध्यापकधूर्त्तप्रशंसारूढैर्जातिः ॥ ३ । १ । १११ ॥

समासस्तत्पुरुषः कर्मधारयश्च। इभ्यपोटा। नागयुवतिः। अग्निस्तोकम्। दधिकतिपयम्। गोगृष्टिः। गोधेनुः। गोवशा। गोवेहत्। गोबष्कयणी। कठप्रवक्ता। कठश्रोत्रियः। कठाध्यापकः। मृगधूर्त्तः। गोमतल्लिका। गोप्रकाण्डम्॥

चतुष्पाद् गर्भिण्या ॥ ३ । १ । ११२ ॥

जातिः समासस्तत्पुरुषः कर्मधारयश्च। गोगर्भिणी। जातिरित्येव। कालाक्षी गर्भिणी॥

युवा खलतिपलितजरद्वलिनैः ॥ ३ । १ । ११३ ॥

समासस्तत्पुरुषः कर्मधारयश्च। युवखलतिः। युवपलितः। युवजरन्। युववलिनः।

तत्पुरुषादट् । देवराजः । राजसखः । नान्तनिर्देशादिह न । मद्रराज्ञी ॥

राष्ट्राख्याद् ब्रह्मणः ॥ ७ । ३ । १०७ ॥

तत्पुरुषादट् । सुराष्ट्रब्रह्मः । राष्ट्राख्यादिति किम् ? । देवब्रह्मा नारदः ॥

कुमहद्भ्यां वा ॥ ७ । ३ । १०८ ॥

ब्रह्मणस्तत्पुरुषादट् । कुब्रह्मः । कुब्रह्मा । महाब्रह्मः । महाब्रह्मा ॥

ग्रामकौटात् तक्ष्णः ॥ ७ । ३ । १०९ ॥

तत्पुरुषादट् । ग्रामतक्षः । कौटतक्षः ॥

गोष्ठातेः शुनः ॥ ७ । ३ । ११० ॥

तत्पुरुषादट् । गोष्ठश्वः । अतिश्वो वराहः ॥

प्राणिन उपमानात् ॥ ७ । ३ । १११ ॥

शुनस्तत्पुरुषादट् । व्याघ्रश्वः । प्राणिन इति किम् ? । फलकश्वा ॥

अप्राणिनि ॥ ७ । ३ । ११२ ॥

य उपमानभूतः श्वा तदन्तात् तत्पुरुषादट् । आकर्षश्वः । अप्राणिनीति किम् ? । वानरश्वा ॥

पूर्वोत्तरमृगाच्च सक्थ्नः ॥ ७ । ३ । ११३ ॥

उपमानार्थात् तत्पुरुषादट् । पूर्वसक्थम् । उत्तरसक्थम् । मृगसक्थम् । फलकसक्थम् ॥

उरसोऽग्रे ॥ ७ । ३ । ११४ ॥

तत्पुरुषादट् । अश्वोरसम् । सेनाया मुखमित्यर्थः । अश्वोरसम् प्रधानमित्यर्थः ॥

कर्मधारयादत् समासान्तः ॥ स्त्रीपुंसौ । स्त्रीपुंस शिखण्डी । द्वन्द्वादेति किम् ? । स्त्रियाः पुमान् स्त्रीपुमान् ॥

## द्विगोरन्नह्नोऽट् ॥ ७ । ३ । ९९ ॥

समाहारार्थात् । पञ्चतक्षी । पञ्चतक्षम् । द्व्यह । द्विगोरिति किम् ? । समहः ॥

## द्वित्रेरायुष ॥ ७ । ३ । १०० ॥

समाहारार्थात् द्विगोरट् । द्व्यायुषम् । त्र्यायुषम् ॥

## वाञ्जलेरलुक ॥ ७ । ३ । १०१ ॥

द्वित्रिभ्यां द्विगोरट् ॥ द्व्यञ्जलम् । द्व्यञ्जलि । त्र्यञ्जलमयम् । त्र्यञ्जलिमयम् । अलुक इति किम् ? । द्व्यञ्जलिर्घट ॥

## खार्या वा ॥ ७ । ३ । १०२ ॥

द्विगोरलुकोऽट् । द्विखारम् । द्विखारि । पञ्चखारधनः । पञ्चखारीधनः ॥

## वार्धाच्च ॥ ७ । ३ । १०३ ॥

खार्याः समासादलुकोऽट् । अर्धखारम् । अर्धखारी ॥

## नाव ॥ ७ । ३ । १०४ ॥

अर्धात् परात् समासाद् द्विगोश्चालुकोऽट् । अर्धनावम् । अर्धनावी । पञ्चनावम् । अलुक इत्येव । द्विनौ ॥

## गोस्तत्पुरुषात् ॥ ७ । ३ । १०५ ॥

अलुकोऽट् ॥ राजगवी । तत्पुरुषादिति किम् ? । चित्रगुः । अलुक इत्येव । पञ्चगु पटः ॥

## राजन्सखे ॥ ७ । ३ । १०६ ॥

श्वसस्तत्पुरुषादत् ॥ निःश्रेयसम् । श्वश्रेयसम् ॥

## नञव्ययात् सङ्ख्याया डः ॥ ७ । ३ । १२३ ॥

तत्पुरुषात् । अदशाः । निस्त्रिंशः खड्गः ॥

## सङ्ख्याव्ययादङ्गुलेः ॥ ७ । ३ । १२४ ॥

तत्पुरुषाड्डः । द्व्यङ्गुलम् । निरङ्गुलम् ॥

## नञ्तत्पुरुषात् ॥ ७ । ३ । ७१ ॥

समासान्तो न । अनृक् । अराजा । तत्पुरुषादिति किम् ? । अधुरं शकटम् ॥

## पुंवत्कर्मधारये ॥ ३ । २ । ५७ ॥

परतः स्त्री अनूङ् स्त्र्येकार्थे उत्तरपदे । प्रतिषेधनिवृत्त्यर्थ आरम्भः । कल्याणप्रिया । मद्रकभार्या । माथुरवृन्दारिका । चन्द्रमुखवृन्दारिका । वानप्रस्थवृन्दारिका । परत स्त्रीत्येव । खट्वावृन्दारिका । अनूङित्येव । ब्रह्मबन्धूवृन्दारिका ॥

## च्वौ क्वचित् ॥ ३ । २ । ६० ॥

परतः स्त्र्यनूङ् पुंवत् । महद्भूता कन्या । क्वचिदिति किम् ? । गोमती भूता ॥

## सर्वादयोऽस्यादौ ॥ ३ । २ । ६१ ॥

परतः स्त्रियः पुंवत् । सर्वस्त्रियः । भवत्पुत्रः । अस्यादाविति किम् ? । सर्वस्यै । बहुवचनाद् भूतपूर्वसर्वादेरपि । दक्षिणोत्तरपूर्वाणाम् ॥

## मृगक्षीरादिषु वा ॥ ३ । २ । ६२ ॥

परतः स्त्री उत्तरपदे पुंवत् । मृगक्षीरम् । काकशावः । काकीशावः ॥

**सरोऽनोऽश्मायसो जातिनाम्नोः ॥ ७ । ३ । ११५ ॥**

तत्पुरुषान्ट् यथासम्भवम् । जालसरसम् । उपानसम् । स्थूलाश्म । कालायसम् । जातिनाम्नोरिति किम् ? । परमसरः ॥

**अह्नः ॥ ७ । ३ । ११६ ॥**

तत्पुरुषादट् । राजाहः । पुंसि । परमाहः ॥

**सङ्ख्यातादह्नश्च वा ॥ ७ । ३ । ११७ ॥**

अहन्तत्पुरुषादट् । सङ्ख्याताहः ॥

**सर्वांशसङ्ख्याऽव्ययात् ॥ ७ । ३ । ११८ ॥**

अहन्तत्पुरुषादट् अह्नादेशः ॥

**अतोऽह्नस्य ॥ २ । ३ । ७३ ॥**

रादिमतः पूर्वपदात्परो णः । सर्वाह्नः । पूर्वाह्णः । द्व्यह्नः । अत्यह्नी कथा ॥

**सङ्ख्यातैकपुण्यवर्षादीर्घाच्च रात्रेरत् ॥ ७ । ३ । ११९ ॥**

सर्वादिस्तत्पुरुषात् । सङ्ख्यातरात्रः । एकरात्रः । पुण्यरात्रः । वर्षारात्रः । दीर्घरात्रः । सर्वरात्रः । पूर्वरात्रः । द्विरात्रः । त्रिरात्रः । अतिरात्रः ॥

**पुरुषायुषद्विस्तावत्रिस्तावम् ॥ ७ । ३ । १२० ॥**

एते तत्पुरुषा अदन्ता निपात्या । पुरुषायुषम् । द्विस्तावा, त्रिस्तावा वेदिः ॥

**श्वसो वसीयसः ॥ ७ । ३ । १२१ ॥**

तत्पुरुषादत् । श्वोवसीयसम् ॥

**निसश्च श्रेयसः ॥ ७ । ३ । १२२ ॥**

वात्। प्लक्षन्यग्रोधौ । वाक्त्वचम् । नाम नाम्नेत्युक्तावपि 'लघ्वक्ष-रादसूत्रे' एकग्रहणाद् बहूनामपि। धवखदिरपलाशाः । 'चार्थ' इति किम् ?। वीप्सासहोक्तौ मा भूत्। ग्रामो ग्रामो रमणीयः । स-होक्ताविति किम् ?। प्लक्षश्च न्यग्रोधश्च वीक्ष्येताम् ॥

## धर्मार्थादिषु द्वन्द्वे ॥ ३ । १ । १५९ ॥

अमात्रमात्त्व वा प्राक्। धर्मार्थौ । अर्थधर्मौ । शब्दार्थौ । अर्थशब्दौ ॥

## लघ्वक्षरासखीदुत्स्वराद्यदल्पस्वरार्च्यमेकम् ॥ ३ । १ । १६० ॥

द्वन्द्वे प्राक्। शरशीर्यम् । अग्नीषोमौ । वायुतोयम्। असखीति किम् ?। सुतसखायौ । अक्षशस्त्रम् । प्लक्षन्यग्रोधौ । श्रद्धामेधे । लघ्वादीति किम् ?। कुक्कुटमयूरी । मयूरकुक्कुटौ । एकमिति किम् ?। शङ्खदुन्दुभिवीणा । द्वन्द्व इत्येव । विस्पष्टपटुः ॥

## मासवर्णभ्रात्रनुपूर्वम् ॥ ३ । १ । १६१ ॥

द्वन्द्वे प्राक्।फाल्गुनचैत्रौ।ब्राह्मणक्षत्रियौ।ब्राह्मणक्षत्रियवैश्या । बलदेववासुदेवौ ॥

## भर्तुतुल्यस्वरम् ॥ ३ । १ । १६२ ॥

द्वन्द्वेऽनुपूर्वं प्राक् । अश्विनीभरणीकृत्तिकाः । हेमन्तशिशिर-वसन्ता । तुल्यस्वरमिति किम् ?। आर्द्रामृगशिरसी । ग्रीष्मवसन्तौ ॥

## त्यदादि ॥ ३ । १ । १२० ॥

एवैकः शिष्यते त्यदादिनान्येन च सहोक्तौ । स च चैत्रश्च तौ । त्यदादीनां मिथः सहोक्तौ स्पर्धे परमिति परमेव शिष्यते । स च यश्च यौ । अहं च स च त्वं च वयम् । बहुलाधिकारात् क्वचित्पूर्व-मपि। स च यश्च तौ । स्त्रीपुंनपुंसकानां सह वचने स्यात्परं लिङ्गमिति

महत करघासविशिष्टे डा॰ ॥ ३ । २ । ६८ ॥

वोत्तरपदे । महाकर॰ । महत्कर । महाघास॰ । महद्घास॰ । महाविशिष्ट॰ । महद्विशिष्टः ॥

स्त्रियाम् ॥ ३ । २ । ६९ ॥

महत करादावुत्तरपदे नित्य डा । महाकरः । महाघास । महाविशिष्ट॰ ॥

जातीयैकार्थेऽच्वे ॥ ३ । २ । ७० ॥

महत उत्तरपदे डा॰ । महाजातीय । महावीर । जातीयैकार्थ इति किम् ? । महत्तर । अच्वेरिति किम् ? । महद्भूता कन्या ॥

न पुवन्निषेधे ॥ ३ । २ । ७१ ॥

महत उत्तरपदे डा । महतीमिय ॥ इक्षूणा छाया इक्षुच्छा॰यमित्यादिषु लिङ्गविशेषव्यवस्था तु लिङ्गानुशासनादवसेया ॥

॥ इति तत्पुरुष ॥

---

॥ अथ द्वन्द्व ॥

चार्थे द्वन्द्व सहोक्तौ ॥ ३ । १ । ११७ ॥

नाम नाम्ना । समुच्चयान्वाचयवरतरयोगसमाहाराश्चत्वारश्चार्था । तत्रैकमर्थं प्रति द्व्यादीना क्रियाकारकद्रव्यगुणाना तुल्यबलानामविरोधिनामनियतक्रमयौगपद्यानामात्मरूपभेदेन चीयमानता समुच्चय । चैत्र पचति पठति च । गुणप्रधानभावमात्रविशिष्ट समुच्चय एवान्वाचय । बटो भिक्षामट गा चानय । द्रव्याणामेव परस्परसव्यपेक्षाणामुद्भूतावयवभेद समूह इतरेतरयोग । चैत्रश्च मैत्रश्च घट कुर्वाते । स एव तिरोहितावयवभेद सहतिप्रधान॰ समाहार॰ । धवश्च खदिरश्च पलाशश्च तिष्ठति । नञाद्ययोर्न समास सहोक्त्यभा-

फलस्य जातौ ॥ ३ । १ । १३५ ॥

बह्वर्थस्य स्वैर्द्वन्द्व एकार्थो नित्यम्। बदरामलकम्। जातौ किम्?। एतानि बदरामलकानि सन्ति ॥

अप्राणिपश्वादेः ॥ ३ । १ । १३६ ॥

द्रव्यवाचिनो जात्यर्थस्य स्वैर्द्वन्द्व एकार्थः । आराशस्त्रि । जातावित्येव । सत्यविन्ध्यौ । प्राण्यादिवर्जनं किम्?। ब्राह्मणक्षत्रियविट्शूद्राः २ । गोमहिषौ २ । प्लक्षन्यग्रोधौ । २ ॥ अश्वरथौ २ । बदरामलके २ ॥

प्राणितूर्याङ्गाणाम् ॥ ३ । १ । १३७ ॥

स्वैर्द्वन्द्व एकार्थः । कर्णनासिकम् । मार्दङ्गिकपाणविकम् । स्वैरित्येव । पाणिगृध्रौ ॥

चरणस्य स्थेणोऽद्यतन्यामनुवादे ॥ ३ । १ । १३८ ॥

कर्तृत्वेन सम्बन्धिनः स्वैर्द्वन्द्व एकार्थः । प्रत्यष्ठात् कठकालापम् । उदगात्कठकौथुमम् । अनुवाद इति किम्?। उदगुः कठकालापाः । भमसिद्धं कथयति ॥

अक्लीबेऽध्वर्युक्रतौ ॥ ३ । १ । १३९ ॥

स्वैर्द्वन्द्व एकार्थः । अर्काश्वमेधम् । अक्लीब इति किम्?। गवामयनादित्यानामयने । अध्वर्युग्रहणं किम्?। इषुवज्रौ । क्रतौ किम्?। दर्शपौर्णमासौ ॥

निकटपाठस्य ॥ ३ । १ । १४० ॥

स्वैर्द्वन्द्व एकार्थः । पदक्रमकम् ॥

नित्यवैरस्य ॥ ३ । १ । १४१ ॥

स्वैर्द्वन्द्व एकार्थः । अहिनकुलम् । नित्यवैरस्येति किम्?। देवासु-

यथापरमेव लिङ्गं भवति । सा च चैत्रश्च तौ । परलिङ्गो द्वन्द्वोऽशीति समासार्थस्य लिङ्गातिदेशात् तद्विशेषणस्य त्यदादेरपि स्त्रीलिङ्गतैव न्याय्येति ते कुक्कुटमयूर्यौ ॥

पुष्यार्थाद्भे पुनर्वसु ॥ ३ । १ । १२९ ॥

सहोक्तौ द्व्यर्थः सन्नेकार्थः स्यात् । उदितौ पुष्यपुनर्वसू । भ इति किम् ? । पुष्यपुनर्वसवो माणवाः ॥

विरोधिनामद्रव्याणां नवा द्वन्द्वः स्वैः ॥३।१।१३०॥

एकार्थः स्यात् । सुखदुःखम् । सुखदुःखे । लाभालाभम् । लाभालाभौ । विरोधिनामिति किम् ? । कामक्रोधौ । अद्रव्याणामिति किम् ? । शीतोष्णे जले । स्वैरिति किम् ? । बुद्धिसुखदुःखानि । सर्वमिदं विकल्पानुकर्मणं नियमार्थम् । विरोधिनामेवाद्रव्याणामेव स्वैरेवेति च । तथा च प्रत्युदाहरणे इतरेतरयोग एव ॥

अश्ववडवपूर्वापराधरोत्तराः ॥ ३ । १ । १३१ ॥

एषां द्वन्द्वा एकार्था वा स्युः स्वैरेव । अश्ववडवम् । अश्ववडवौ । पूर्वापरम् । पूर्वापरे । अधरोत्तरम् । अधरोत्तरे ॥

पशुव्यञ्जनानाम् ॥ ३ । १ । १३२ ॥

स्वैर्द्वन्द्व एकार्थो वा । गोमहिषम् । गोमहिषौ । दधिघृतम् । दधिघृते ॥

तरुतृणधान्यमृगपक्षिणां बहुत्वे ॥ ३ । १ । १३३ ॥

प्रत्येकं स्वैर्द्वन्द्व एकार्थो वा । प्लक्षन्यग्रोधम् । प्लक्षन्यग्रोधाः । कुशकाशम् । कुशकाशाः । तिलमाषम् । तिलमाषाः । ऋश्यैणम् । ऋश्यैणाः । हंसचक्रवाकम् । हंसचक्रवाकाः ॥

सेनाङ्गक्षुद्रजन्तूनाम् ॥ ३ । १ । १३४ ॥

बह्वर्थानां स्वैर्द्वन्द्व एकार्थो नित्यम् । अश्वरथम् । यूकालिक्षम् ॥

